# I HAVE 14 BEST FRIENDS TO HELP ME TOP MY CLASS










Apsara Drawing Pencils come in 14 grades and help me in so... so many subjects. My classmates also include Apsara Poster Colours, Water Colour Tubes, Oil Pastels and Wax Crayons. All, toppers.



**Apsara®** DRAWING PENCILS

For information, write to:
**Hindustan Pencils Limited,**
510, Himalaya House, Bombay-400 001.



# चन्दमामा

अगस्ट्-१९९०

*

## अन्तरङ्गम्



*


प्रतिकृतिमूल्यं रू. ३-००

वार्षिकं ग्राहकशुल्कं रू. ३६-००

# चन्दमामा

संस्थापकः– 'चक्रपाणिः'      सञ्चालकः– 'नागिरेड्डी'


कश्चन संस्कृतविद्यालयः। अतः तत्रत्याः अध्यापकाः सर्वे संस्कृतज्ञाः एव। कदाचित् तैः सह मिलितम्। तत्सन्दर्भे तेषु अन्यतमेन अध्यापकेन उक्तम्– "संस्कृतेन एव सम्भाषणं करणीयम् इति अस्माकम् अपि इच्छा अस्ति एव। एतद्विषये अस्माभिः इतः पूर्वम् अनेकवारं प्रतिज्ञा कृता आसीत्। इतः परं तु वयं संस्कृतेन एव सम्भाषणं करिष्यामः" इति।

वस्तुतः प्रतिज्ञा नाम का? कार्यसिद्धिः एव यस्याः फलं सा एव खलु प्रतिज्ञा? एकस्मिन् एव विषये पुनः पुनः प्रतिज्ञा कृता इत्येतत् वचनं किं द्योतयति? प्रतिज्ञास्वीकर्तुः दौर्बल्यं द्योतयति खलु? एतादृश्या प्रतिज्ञया किं प्रयोजनम्? कृतायाः अकृतायाश्च प्रतिज्ञायाः समानं फलं चेत् कृतया तया किं साधितं भवेत्?

अल्पमतिः बालकः कश्चित् सङ्कल्पं करोति – अद्य पठामि इति। कोऽपि विघ्नः आपतति। अतः न पठति। अनन्तरदिने पुनः सङ्कल्पः। तस्मिन् दिने अपि विघ्नः। तदनन्तरदिने पुनः सङ्कल्पः। तदा अपि विघ्नः एव। एवं प्रतिदिनम् अपि विघ्नैः बाधितः सः पठने न प्रवर्तते एव। तस्य अप्रवर्तने वास्तविकं कारणं तु – विघ्नप्राप्तिः न, अपि तु सङ्कल्पदृढतायाः अभावः। संस्कृतज्ञानाम् अस्माकं प्रतिज्ञा एतादृशी न स्यात्। सकृत्प्रतिज्ञकाः भवेम वयम्।


सम्पुटः–७      अगस्ट्–१९९०      सञ्चिका–५

प्रतिकृतिमूल्यं रू. ३-००  *  वार्षिकं ग्राहकशुल्कं रू. ३६-००







रसप्रश्नाः—

# रणरङ्गम् आगतः रावणः

(रावणपक्षस्य प्रमुखाः अपि यदा हताः तदा रावणः महता दर्पेण रणरङ्गं प्रविष्टवान्। किन्तु रामबाणैः तीव्रं व्रणितः अभवत् सः। तस्य किरीटं पतितम्। तस्य सारथिः मृतः। एवं तस्मिन् दिने पराजयं प्राप्य प्रतिगतवान् रावणः। अनन्तरकालीनां घटनाम् आधारीकृत्य वाल्मीकिरामायणानुसारं केचन प्रश्नाः सज्जीकृताः सन्ति। युक्तम् उत्तरं जानन्तु।)

I. रावणः पूर्वं विभिन्नेषु सन्दर्भेषु कैश्चित् शप्तः आसीत्। अधः शापदातॄणां नामभिः सह शापदानेन असम्बद्धम् अपि एकं नाम अस्ति। तत् नाम किम्?
(अ) पार्वती। (आ) नन्दिकेश्वरः। (इ) इन्द्रः। (ई) रम्भा।

II. 'देवैः न, अपि तु सामान्येन मानवेन रामेण आक्रमणं कृतम्' इति कुम्भकर्णं कः निवेदितवान्?
(अ) कश्चन भटः। (आ) यूपाक्षः नाम राजसचिवः। (इ) प्रहस्तः नाम मन्त्री।

III. कुम्भकर्णस्य पितुः नाम किम्?
(अ) विश्वावसुः। (आ) विश्रावणः। (इ) विश्रवाः।

IV. 'षण्मासान् यावत् निद्रां प्राप्नोतु। एकं दिनं जागरितः तिष्ठतु' इति कुम्भकर्णं कः शप्तवान्?
(अ) ब्रह्मा। (आ) इन्द्रः। (इ) कुबेरः।

V. लङ्कायां स्थितस्य कुम्भकर्णस्य दर्शनात् भीतां वानरसेनां शान्तां कर्तुं रामेण किं कृतम्?
(अ) सः शक्तिहीनः स्थूलकायः इति वानरान् बोधितवान्।
(आ) सः न मानवः, अपि तु यन्त्रम् इति वानरान् बोधितवान्।
(इ) 'मयि स्थिते भीतिः किमर्थम्?' इति वानरान् बोधितवान्।

उत्तराणि—

I.–(इ). II.–(आ). III.–(इ). IV.–(अ). V.–(आ).

# नेपालदेशे प्रजाप्रभुत्वम्

हिमालयपर्वतस्य दक्षिणसानुप्रदेशम् आलम्ब्य नेपालदेशः प्रसृतः अस्ति। अस्माकं देशस्य उत्तरस्यां दिशि स्थितस्य नेपालदेशस्य पश्चिमदिशि सतलज्नदी प्रवहति। तस्य पूर्वस्यां दिशि सिक्किम् अस्ति। सार्धैककोटिजनसङ्ख्यायुक्तस्य नेपालस्य राजधानी काठमण्डुनगरम्।

नेपालदेशे बौद्धाः बौद्धेतराः हिन्दवः च अधिकसङ्ख्याकाः। नेपालस्य एकस्मिन् पार्श्वे भारतम्, अपरस्मिन् पार्श्वे चीनादेशश्च स्तः। तथापि नेपालस्य मधुरः निकटश्च सम्बन्धः भारतेन सहैव। एषः सम्बन्धः न केवलम् इदानीन्तनः, अपि तु प्राचीनः। अशोकचक्रवर्तिनः काले, समुद्रगुप्तस्य काले चापि नेपालदेशः तयोः साम्राज्ययोः अङ्गभूतम् आसीत्।

१८४६ तः १९५१ पर्यन्तं नेपालदेशे राज्ञां परिपालनं न आसीत्। मन्त्रिवंशीयाः एव 'राणा' नाम्ना शासनं कुर्वन्तः आसन्।

१९५१ तमे वर्षे राणाशासनं विरुध्य व्यवहृतवत्यः प्रजाः। राणाशासनं समाप्तं, राज्ञा अधिकारसूत्रं गृहीतम्। तथापि प्रजासु प्रजाप्रभुत्वकामना जागर्ति स्म एव। नागरिकाः तदा तदा निर्वाचनद्वारा मन्त्रिणः चिन्वन्ति स्म। किन्तु ते मन्त्रिणः चिरं न तिष्ठन्ति स्म। शासनविषये अन्तिमनिर्णयः राज्ञः अधीनः एव भवति स्म।

१९५१ तमे वर्षे राजा महेन्द्रः पक्षरहितायां शासनसभायां 'राष्ट्रिय पञ्चायत्' पद्धतिं प्रवेशितवान्। किन्तु एतया पद्धत्या जनानाम् अभिप्रायः प्रकटितः न भवति स्म। अतः प्रजानां समस्याः परिहृताः न भवन्ति स्म। अतः जनाः एकराजतन्त्रव्यवस्थां पक्षरहितां राष्ट्रिय पञ्चायत् व्यवस्थां च विरुध्य आन्दोलनम् आरब्धवन्तः।

१९७२ तमे वर्षे राज्ञा महेन्द्रः दिवं गतः। तदीयः पुत्रः बीरेन्द्रः राजा जातः। सः




विवेकयुक्तेन मार्गेण प्रजानां समस्याः परिहर्तुम् इष्टवान्। अन्ते प्रजानाम् अनुरोधं पुरस्कुर्वन् प्रजाप्रभुत्वस्य आनयने सहमतिं प्रदर्शितवान्। इतः परं सः आंग्लेयानां राज्ञी इव नाममात्रेण 'राजा' भविष्यति। किन्तु राज्ञः अधिकाराः न भविष्यन्ति।

चिरकालात् प्रतीक्षिता आशा पूर्णा जाता अस्ति इत्यतः नेपालजनाः नितरां सन्तुष्टाः सन्ति। इदानीं ते अपेक्षितस्य नायकस्य निर्वाचने अधिकारं प्राप्तवन्तः सन्ति। प्रजाप्रभुत्वस्य पूर्णं लाभं प्राप्तुम् अर्हन्ति ते। तैः ये निर्वाचिताः भवन्ति, तादृशाः नायकाः यं मार्गं निर्दिशन्ति तदाधारेण तेषां भविष्यं निर्णीतं भविष्यति।




# सम्माननार्हता

लक्ष्मीपुरनामके ग्रामे धर्मराजः नाम कश्चन न्यायाधीशः आसीत्। सः नीतिशास्त्रं सम्यक् अधीतवान् आसीत्। न्यायनिर्णये तस्य असदृशं पाण्डित्यम् आसीत्।

धर्मराजस्य कीर्तिः राज्ञा शूरवर्मणा अपि श्रुता। तस्य देशे अन्यस्य कस्यापि न्यायाधीशस्य एतादृशी कीर्तिः न आसीत्। अतः राजा निश्चितवान् यत् न्यायाधीशस्य धर्मराजस्य सम्माननं करणीयम् इति।

कश्चन विशेषदूतः धर्मराजसमीपं गत्वा राज्ञः आशयं निवेद्य– 'भवता राजधानीं प्रति आगन्तव्यम्' इति प्रार्थितवान्।

न्यायाधीशस्य धर्मराजस्य तु सम्माननादिषु आसक्तिः नास्ति। किन्तु राज्ञः सूचना आज्ञातुल्या खलु? अतः सः सम्माननम् अङ्गीकृत्य तस्मिन् एव दिने राजधानीं प्रति प्रस्थितवान्।

राजधानीगमनमार्गे रामचन्द्रः नाम कश्चन कृषिकः अभिमुखं मिलितः। रामचन्द्रः लक्ष्मीपुरीयः एव। केभ्यश्चित् मासेभ्यः पूर्वं भैरवः नाम धनिकः कृत्रिमं व्यवहारपत्रं प्रदर्शयन् 'भवतः पितामहेन एतत् लिखित्वा दत्तम् आसीत्' इति वदन् रामचन्द्रस्य भूमिं वशीकृतवान् आसीत्। तदा रामचन्द्रः एतस्य धर्मराजस्य पुरतः आगत्य स्वस्य कष्टं भैरवस्य दुराचारं च निवेदितवान् आसीत्। तदा धर्मराजः व्यवहारपत्रं सुसूक्ष्मं परिशील्य, तत् कृत्रिमम् इति सप्रमाणं निर्णीय– 'परिहारधनेन सह भूमिः भैरवेण रामचन्द्राय अर्पणीया' इति निर्णयं श्रावितवान् आसीत्।

रामचन्द्रस्य दर्शनात् पूर्वतनं सर्वं स्मृतवान् धर्मराजः। अतः सः रामचन्द्रं पृष्टवान्– "किं भोः, सर्वं कुशलं खलु?" इति।

"अनामिका"



तदा रामचन्द्रः उक्तवान्– "जगदीशवर्यस्य कृपया इदानीं सुखेन जीवामि श्रीमन्!" इति।

एतत् श्रुत्वा आश्चर्यं प्रकटयन् धर्मराजः पृष्टवान्– "जगदीशवर्यः नाम सः भूस्वामी एव खलु? तेन किमपि साहाय्यं कृतं वा?" इति।

रामचन्द्रः क्षणद्वयस्य मौनस्य अनन्तरम् उक्तवान्– "इदानीम् अहं मम पत्नीपुत्रादयः च दिने द्विवारं भोजनं कुर्मः यत् तत्र कारणं जगदीशवर्यस्य कृपा एव। प्रातःस्मरणीयः सः। भवता तु मदनुकूलतया निर्णयः श्रावितः। किन्तु उत्कोचदानादि-कारणतः अहं विद्यमानात् क्षेत्रतः अपि वञ्चितः अभवम्। तदा भूस्वामी जगदीशवर्यः एकर्द्वयमितां भूमिं मह्यं दानरूपेण दत्तवान्। तस्यां भूमौ कृषिं कुर्वन् इदानीं सुखेन जीवामि" इति।

तदा पूर्वापेक्षया अधिकम् आश्चर्यं प्राप्य न्यायाधीशः धर्मराजः पृष्टवान्– "किं भोः, एवं वदति? भैरवेण प्रदर्शितानि व्यवहारपत्राणि कृत्रिमाणि इति वदता मया भूमिः भवता एव प्राप्तव्या इति निर्णयः श्रावितः आसीत् खलु?" इति।

रामचन्द्रः हसन्– "निर्णयः तु श्रावितः। किन्तु किं तेन? निर्णयः व्यवहारे अन्वितः भवति चेदेव खलु प्रयोजनम्? किम् अधिककथनेन? अहं पुनः मेलिष्यामि" इति उक्त्वा न्यायाधीशं नमस्कृत्य ततः निर्गतवान्।

रामचन्द्रेण कटुसत्यम् उक्तम् आसीत्। धर्मराजः निरुद्विग्नः सन् सर्वं परामृष्टवान्। परिस्थितेः विवेचनं मनसि एव सम्यक् कृतं तेन।

धर्मराजः राजधानीं प्राप्तवान्। राजास्थाने उपस्थितं तं सम्माननप्राप्त्यर्थं सिंहासनसमीपम् आगन्तुं सूचितवान् राजा। धर्मराजस्य सम्माननं द्रष्टुं लक्ष्मीपुरतः बहवः आगताः आसन्। एवम् आगतेषु भूस्वामी जगदीशः अपि अन्यतमः आसीत्।

धर्मराजः सिंहासनसमीपं गत्वा विनयेन– "प्रभो, अहम् एतत् सम्माननं निराकुर्वन्

अस्मि। एतदर्थं कृपया क्षन्तव्यः अहम्। अहं न्यायाधीशस्थाने तिष्ठन् यत् न्यायनिर्णयं करोमि तदर्थं किल मम सम्माननम्? किन्तु अहम् एतदर्थं नितराम् अनर्हः। पश्यन्तु सर्वे, भूस्वामी जगदीशवर्यः तत्र उपविष्टः अस्ति। सः वस्तुतः सम्माननार्हः। अतः अद्य तस्य सम्माननं भवतु" इति निवेदितवान्।

एतत् श्रुत्वा सर्वे सभासदः आश्चर्येण कुतूहलेन च जगदीशवर्यं दृष्टवन्तः। राजा तु आश्चर्येण धर्मराजं पश्यन् अस्ति!

तदा धर्मराजः राजानम् उद्दिश्य– "प्रभो! अत्र आश्चर्यकरं किमपि नास्ति" इति वदन् रामचन्द्रस्य कथां विस्तरेण निवेद्य पुनः उक्तवान्– "कीदृशं चित्रम्! न्यायाधीशः अहं युक्तायुक्ततां परिशील्य न्याय्यं निर्णयं श्रावयितुं समर्थः। किन्तु अनीतिपराणाम् उत्कोचग्राहिणां केषाञ्चन अधिकारिणां कारणतः निर्णयः क्रियान्वितः तु न भवति। अतः जनाः निर्णयस्य फलं न प्राप्नुवन्ति। किन्तु एषः भूस्वामी जगदीशवर्यः तु निर्धनेभ्यः असहायेभ्यः च गुप्तरूपेण भूमिं यच्छन् तादृशान् रक्षति। परम्परया प्राप्तायाः भूमेः सद्विनियोगं कुर्वन् प्रसिद्धिपराङ्मुखः सन् जीवति एषः। अतः एषः एव सम्माननार्हः" इति।

एतत् श्रुत्वा राजा शूरवर्मा– "भवता युक्तम् एव उक्तम्। जगदीशवर्यः सम्माननार्हः इत्यत्र सन्देहः नास्ति। भवान् अपि सम्माननार्हः एव। राज्ये अधिकारिणां दुराचारः यः प्रचलति तं प्रकटीकुर्वन् भवान् माम् उपकृतवान्। भवतः न्यायनिर्णयः अपि आदर्शभूतः। अतः भवतोः उभयोः अपि सम्माननं प्रचलति अद्य" इति वदन् उभयोः अपि सम्माननं कृतवान्।

अनन्तरं राजा शूरवर्मा समर्थानां गूढचराणां द्वारा भ्रष्टान् अधिकारिणः अन्विष्य कारागारे स्थापितवान्। अन्याय्यं कर्तुं कोऽपि यथा न शक्नुयात् तथा कठोरं नियमं रचयित्वा नियमं कार्यान्वितम् अपि कृतवान् सः।





# स्वामिभक्तः दासः

बागदादनगरे पूर्वं कश्चन प्रसिद्धः वणिक् आसीत्। वाणिज्यनिर्वहणार्थं तेन बहवः कर्मकराः नियोजिताः आसन्। त्रयः दासाः अपि तस्य गृहे आसन्।

तेषु दासेषु अन्यतमस्य कार्यम् अहोरात्रं स्वामिनः पादयोः मर्दनम्। किञ्चित् आलस्यं प्रदर्शितं चेदपि वणिक् कुपितः भवति स्म। कोपस्य फलरूपेण सः दासः एकस्मात् भोजनात् वञ्चितः भवति स्म।

अपरः दासः गभीरात् कूपात् आदिनं जलम् उद्धृत्य पात्रेषु पूरयति स्म। वणिजः गृहे जलाभावः यथा न सम्भवेत् तथा कार्यं करणीयं तेन।

तृतीयः दासः तु वणिजः गृहस्य निमित्तम् अपेक्षितानि वस्तूनि विपणितः आनयति। आनयनार्थम् अन्यस्य जनस्य, शकटस्य वा साहाय्यं नास्ति। सर्वाणि वस्तूनि स्वयं तेन आनेतव्यानि।

एवं त्रयः अपि कठिनं परिश्रमं कुर्वन्ति। किन्तु परिश्रमानुगुणं फलं तु न प्राप्नुवन्ति। शुष्काः नीरसाः रोटिकाः एव तेषाम् आहारः। सर्वदा निन्दनम् एव शृण्वन्ति ते। कदापि वणिजः मुखात् साधुवादः न श्रुतः तैः।

बहोः कालतः वणिजः अपत्यं न आसीत्। सौभाग्यवशात् वार्धके तेन एकः पुत्रः प्राप्तः। इदानीम् एषः पितृत्वसुखम् अनुभवन् सन्तोषेण व्यवहरति। पुत्रोत्सवम् आचरन् बन्धुमित्रेभ्यः विशेषभोजनकूटं व्यवस्थापितवान् सः। दरिद्रेभ्यः अन्नवस्त्रादीनि दत्तवान्। नगरे धर्मशालायाः निर्माणं करिष्यामि इति प्रकटितवान्। एवम् अपरिमितेन सन्तोषेण दिनानि यापयति सः।

सन्तोषसन्दर्भे तस्य मनसि अन्यः अपि विचारः आगतः– 'एते त्रयः दासाः बहोः

कालतः मम सेवां कुर्वन्तः सन्ति। अतः एतान् दास्यविमुक्तान् करिष्यामि' इति।

अतः सः तान् त्रीन् अपि दासान् आहूय उक्तवान्– "भवन्तः एतावन्ति वर्षाणि श्रद्धया मम गृहे कार्याणि कृतवन्तः। पुत्रस्य प्राप्त्या अहं नितरां सन्तुष्टः अस्मि। भवन्तः अपि सन्तोषं प्राप्नुवन्तु इति मम इच्छा। अद्य भवत्सु स्वकार्येण यः मां तोषयति तं दास्यात् मोचयिष्यामि" इति।

वस्तूनाम् आनेता दासः तस्मिन् दिने आदिनं वस्तूनि शिरसि स्थापयित्वा आनीतवान्। रात्रौ अपि वस्तूनि महता श्रमेण गृहं प्रापितवान्। जलोद्धर्ता दासः अहोरात्रं जलम् उद्धृत्य पात्रेषु पूरितवान्। एवं निरन्तरं कार्यं कुर्वन् सः मूर्च्छां गतवान्।

किन्तु पादमर्दकः दासः तु तस्मिन् दिने कार्यार्थं न आगतः एव। सः कुत्रापि कोणे उपविश्य सम्यक् निद्रां कृतवान्।

वणिक् दीर्घकालं यावत् पादमर्दकस्य दासस्य प्रतीक्षां कृतवान्। तथापि स तु न आगतः एव। एतेन कुपितः वणिक् सेवकान् आदिष्टवान् यत् तं पादमर्दकं सेवकं हस्तयोः पादयोः च बद्ध्वा अत्र आनयन्तु इति।

अल्पे एव काले सेवकाः तं पादमर्दकं दासं बद्ध्वा आनीय स्वामिनः पुरतः पातितवन्तः।

वणिक् तान् सेवकान् पृष्टवान्– "किं कुर्वन् आसीत् एषः?" इति।

"पाकशालायां उपविश्य सम्यक् निद्रां




कुर्वन् आसीत्" इति उक्तवन्तः सेवकाः।

"अन्यौ दासौ कुत्र स्तः? तौ किं कुरुतः?" इति पृष्टवान् वणिक्।

"तौ तु निरन्तरं कार्यं कृत्वा नितरां श्रान्तौ। उभौ अपि इदानीं मूर्च्छावस्थायां स्तः" इति निवेदितवन्तः सेवकाः।

"तौ अत्र आनयन्तु" इति आज्ञापितवान् वणिक्। सेवकाः तौ आनीय वणिजः पुरतः शायितवन्तः। "शैत्योपचारेण एतौ सचेतनौ कुर्वन्तु" इति पुनः आज्ञापितवान् वणिक्। सेवकाः तथैव कृतवन्तः। तौ दासौ सचेतनतां प्राप्य उत्थाय वणिजं नमस्कृत्य पार्श्वे स्थितवन्तौ।

तौ उद्दिश्य उक्तवान् वणिक्– "भवतोः स्वामिभक्त्या अहं नितरां सन्तुष्टः अस्मि।

भवन्तौ मां सन्तोषयितुम् इच्छन्तौ अहोरात्र परिश्रमं कृतवन्तौ। भवतोः व्यवहारेण तुष्टः अहं भवन्तौ दास्यात् मुक्तौ कृतवान् अस्मि। अद्य आरभ्य भवन्तौ स्वतन्त्रौ। इतः परं यथा इच्छा तथा जीवनं यापयितुम् अर्हतः" इति।

अनन्तरं सः पादमर्दकं दासं पश्यन् पृष्टवान्– "भोः, दास्यतः विमुक्तिं प्राप्तुम् अहम् उत्तमम् अवकाशं कल्पितवान् आसम्। भवान् तु अविवेकेन व्यवहरन् आत्मनः हितं नाशितवान्। भवादृशः मन्दमतिः अलसः जनः लोके अन्यः न स्यात् एव। किं भवान् दास्यात् विमुक्तिं न इच्छति?" इति।

तदा सः दासः अश्रूणि स्रावयन् उक्तवान् "श्रीमन्! आजीवनं भवतः एव सेवा करणीया इति मम इच्छा। दास्यात् विमुक्तिः प्राप्ता चेत् अन्यत्र गन्तव्यं भवेत् खलु? अतः एव अहम् अद्य एवं व्यवहृतवान्। दास्यरूपेण चेदपि भवतः समीपे स्थितिः एव प्रिया मम" इति।

एतत् श्रुत्वा परमाश्चर्यं सन्तोषं च अनुभवन् वणिक्– "अये मूर्ख! दास्यात् मुक्तिः प्राप्ता चेत् मम गृहं परित्यक्तव्यम् इति न कोऽपि नियमः। अस्तु तावत्, भवतः अपि स्वामिभक्तिः अपूर्वा एव। भवतः विषये अहं नितरां सन्तुष्टः अस्मि। अद्य आरभ्य भवान् न दासः। भवान् स्वतन्त्रः। किन्तु भवान् मम सान्निध्यम् एव इच्छति इत्यतः अद्य आरभ्य मम वाणिज्ये साहाय्यकः सन् परिश्रमानुगुणं वेतनं प्राप्स्यति। एतेन सन्तुष्टः खलु भवान्?" इति।

एतत् श्रुत्वा सन्तोषेण अश्रूणि स्रावयन् सः दासः कृतज्ञतापूर्वकं वणिजं नमस्कृतवान्। तं प्रीत्या उत्थापयन् पुनः उक्तवान् वणिक्– "इतः परं भवान् उत्तमानि दिनानि द्रक्ष्यति। योग्यां वधूम् अन्विष्य भवतः विवाहं निर्वर्तयिष्यामि अहम्" इति।

एतदनन्तरम् सः दासः वणिजः कर्मकरः जातः। अल्पे एव काले तस्य विवाहः अपि प्रवृत्तः। अनन्तरं सुखेन जीवनं यापितवान् सः।






# १०

('अमृतपुरी हठात् आक्रमणेन वशीकरणीया' इति उद्देशेन वीरसिंहः कार्यप्रवृत्तः जातः। किन्तु अकस्मात् आगतेन प्रवाहेण सेना नीता। 'सेनावर्धनार्थम्, आयुधसङ्ग्रहार्थं वा पर्याप्तमात्रेण धनम् आवश्यकम्' इति आलोच्य वीरसिंहः विशेषकरसङ्ग्रहं कर्तुं कपालकण्ठम् आदिष्टवान्। किन्तु जनाः एतस्मिन् विषये विशेषतः प्रतिरोधं प्रदर्शितवन्तः। तदनन्तरम्......)

वसन्तऋतोः आगमनेन अरण्ये अपूर्वं सौन्दर्यं प्रसृतम् अस्ति। हरिद्वर्णेण शोभमानेषु तरुगुल्मेषु विविधैः वर्णैः युक्तानि पुष्पाणि दृश्यन्ते। कोकिलानां कूजनेन इतरेषां पक्षिणां कलरवेण च समग्रम् अरण्यं प्रतिध्वनितम् अस्ति। वृक्षान् आलिङ्ग्य स्थिताः लताः कोमलैः पल्लवैः वनदेवीं वीजयन्त्यः इव दृश्यन्ते। एवं समग्रे अरण्ये काचित् अपूर्वा शोभा विलसति।

शान्तिपुरस्य युवराजः एतस्मिन् अरण्ये निवसति। तस्य वसतेः कारणतः वसन्तशोभा द्विगुणितं प्रवृद्धा अस्ति। युवराजः इदानीं षड्वर्षीयः बालकः। जयानन्दमुनिः तं सन्दीपनाम्ना आह्वयति स्म। जयानन्दमुनिः दृष्टिक्षेपमात्रेण अरण्यस्थान् पशून् पक्षिणः च स्वस्य इच्छायाः अनुगुणं प्रवर्तयितुं शक्नोति



स्म खलु? एतया एव शक्त्या सः स्वस्य सर्वाणि कार्याणि साधयति स्म। जयानन्दमुनिः इच्छति स्म यत् कालक्रमशः एषा अपूर्वा शक्तिः सन्दीपे सङ्क्रामणीया इति। सन्दीपः तु मनुष्यैः सह यथा, तथा वन्यमृगैः सह लीलया क्रीडति।

सन्दीपस्य मित्रवर्गे करीन्द्रः नाम गजः अन्यतमः। करीन्द्रस्य दन्ताः प्रबलाः दीर्घाः च आसन्। सः समग्रे अरण्ये निवसतां गजानां नायकः आसीत्। अतः करीन्द्रः इति अन्वर्थं नाम तस्य।

करीन्द्रः प्रतिदिनं प्रातः युवराजस्य सन्दीपस्य समीपम् आगच्छति। गजस्य उपरि आरोढव्यम् इति यदा इच्छा भवति तदा सन्दीपः स्वस्य इच्छां हस्तसङ्केतेन करीन्द्रं निवेदयति स्म। तदा करीन्द्रः स्वस्य शुण्डया जागरूकतया तम् उन्नीय स्वस्य पृष्ठभागस्य उपरि उपवेशयति स्म। कपिः कश्चन सन्दीपस्य पृष्ठतः उपविशन् सन्दीपस्य पतनं यथा न भवेत् तथा जागरूकतया रक्षति स्म। मल्लिका नाम शुकी वृक्षस्य शाखासु सञ्चरन्ती अग्रे कुत्र कथं गन्तव्यम् इति गजं सूचयति स्म।

यदा युवराजः अरण्यम् आगतः तदारभ्य कश्चन भल्लूकः तस्य योगक्षेमं निर्वहति स्म। मधुराणि रुचिकराणि च कन्दमूलादीनि आनीय तस्मै ददाति। अरण्यसीमाप्रदेशे स्थितेभ्यः क्षेत्रेभ्यः रुचिकरान् इक्षुदण्डान् अपि कदाचित् आनयति सः। उभौ वानरौ परस्परस्पर्धाभावेन आम्र-कदली-पनसादीनि स्वादुफलानि आनीय यच्छतः। एवं प्रकृतिसिद्धम् आहारं सेवमानः युवराजः वर्धते।

व्याघ्रशिशुभिः सह क्रीडने युवराजस्य सन्दीपस्य विशेषासक्तिः। तृणमयी भूमिः तस्य क्रीडाक्षेत्रम्। व्याघ्रशिशुम् आरुह्य कदाचित् सञ्चरति सः।

उषःकाले उत्थानसमनन्तरम् एव युवराजः नदीं गत्वा मुखमार्जनादिकं स्नानं च समाप्य गुरोः पुरतः भक्त्या उपविशति। तदा गुरुः जयानन्दमुनिः तं प्रार्थनाश्लोकान् ध्यानक्रमं च बोधयति। अनन्तरं सः गुरुणा



सह अरण्ये सञ्चारं करोति। तत्समये गुरुः परितः दृश्यमानानां वृक्षाणां गुल्मानां लतादीनां च वैशिष्ट्यं निरूपयन् अभिज्ञानक्रमम् अपि विस्तरेण बोधयति।

''वत्स! परिसरः अस्माकं देवता। यथा गौरवभावनया वयं देवं पश्यामः तथा एव भावनया परिसरः द्रष्टव्यः। एतत्सर्वं प्रकृत्या निर्मितम्। प्रकृतिः च अनादिः। एतं प्रकृतिविलासं भवान् श्रद्धया पश्यतु। तदा अपूर्वाः बहवः अंशाः ज्ञायन्ते भवता। क्षणे क्षणे अत्र नावीन्यं दृश्यते। अत एव एतस्य एतादृशी रमणीयता। पश्यतु, तत्र चम्पकवृक्षः अस्ति, अत्र मल्लिकालता अस्ति। एतयोः जन्मभूमिः अभिन्ना। वायुः, जलं, सूर्यरश्मिः च समानतया सेविताः एताभ्याम्। तथापि तयोः गुणविशेषाः नितरां भिन्नाः। फलादीनां विषये अपि एवम् एव। सर्वं प्रकृतिवैचित्र्यम्। यथा पुष्पफलादिषु परिमलः भवति तथा मानवेषु अपि भवति। सुसूक्ष्मं परिशीलितं चेत् एव एतत् ज्ञायते। वृक्षलतादीनां जीवनं यथा परोपकाराय,तथैव स्यात् अस्माकं जीवनम् अपि। अतः वृक्षलतादिषु अस्माकम् आत्मीयता स्यात् सदापि'' इति सन्दीपं बोधयति मुनिः जयानन्दः।

गुरोः उपदेशं श्रद्धया शृणोति युवराजः सन्दीपः। एकाकी सञ्चरन् परिसरं पश्यन् सः गुरोः वचनानि पुनः पुनः स्मरति। प्रकृतिदर्शनेन आनन्दम् अनुभवन् सः प्रकृतिमातरं मनसा नमस्करोति।

''वृक्षादीनां जीवः अस्ति इति भवान् जानाति खलु? पीडनेन ते दुःखिताः भवन्ति। मृदु स्पर्शेन च सन्तुष्टाः भवन्ति। ते यत् फलन्ति, पुष्प्यन्ति वा तत् परोपकाराय एव। अन्यं तोषयन्तः ते स्वयं सन्तोषं प्राप्नुवन्ति। अस्माकं प्रवृत्तिः अपि एवम् एव स्यात्। परोपकारेण एव सन्तोषः प्राप्तव्यः। भवान् परोपकारशीलः भवति इत्यत्र मम महान् विश्वासः अस्ति'' इति कदाचित् वदति जयानन्दमुनिः।

एवं राजधानीतः सुदूरे रमणीये प्रशान्ते च अरण्यप्रदेशे जयानन्दमुनेः कृपाच्छायायां वर्धमानः अस्ति युवराजः सन्दीपः।

गुरुः जयानन्दमुनिः रामकृष्णादीनां नचिकेतोध्रुवादीनां कथाः तदा तदा श्रावयति। 'रामकृष्णादीनां तु मातापितरौ भवतः। मम तु तौ किमर्थं न स्तः?' इति कदाचित् शङ्का उत्पन्ना सन्दीपस्य मनसि।

सः कदाचित् गुरुं पृष्टवान् एव– "गुरुवर्य! मम मातापितरौ किमर्थम् अत्र न स्तः?" इति।

"वत्स! देवः मातापितृद्वारा स्वकृपां बालकं प्रापयति। मातापित्रोः आवश्यकता अपि एतदर्थम् एव। भवान् तु असामान्यः बालः। भवता भगवतः कृपा साक्षात् प्राप्यमाणा अस्ति। अतः मातापितरौ भवत्सकाशे न स्तः" इति उक्तवान् जयानन्दमुनिः।

एतेन उत्तरेण तृप्तः अभवत् सन्दीपः। "आचार्य! एवं तर्हि भवान् एव मम पिता। प्रकृतिः एव वात्सल्यमयी माता। अतः अन्ययोः मातापित्रोः आवश्यकता नास्ति मम। भवतोः द्वारा भगवान् कृपां प्रापयति" इति मन्दहासपूर्वकम् उक्तवान् सन्दीपः।

तदा जयानन्दमुनिः– "चतुरः खलु भवान्! प्रह्लादेन इव भवता सर्वेषु जीविषु वस्तुषु अपि भगवान् द्रष्टव्यः। तादृश्या शक्त्या भगवान् भवन्तम् अनुगृह्णातु इति आशासे" इति उक्त्वा सन्दीपं प्रीत्या आलिङ्गितवान्।

* * * *



राजधान्यां सिंहासने उपविश्य चारैः आनीतां वार्तां श्रुतवान् वीरसिंहः। वार्तां श्रुत्वा कोपेन ज्वलन् सः कपालकण्ठम् उक्तवान्– "कपालकण्ठ! का एषा दुर्वार्ता प्रतिदिनम् अपि? अद्यापि लुण्ठाकैः धान्यानि स्वायत्तीकृतानि इति श्रूयते। के ते लुण्ठाकाः? अस्माकं सैनिकाः किं कुर्वन्तः सन्ति? सेनापतिना भवता किं क्रियमाणम् अस्ति?" इति।

कपालकण्ठः तु किं वक्तव्यम् इति अजानन् शिरः अवनमय्य मौनं स्थितवान्।

"अये! लुण्ठाकान् ग्रहीतुम् असमर्थः भवान् कीदृशः सेनापतिः? सेनापतेः नाम्नः श्रवणतः एव जनाः भीताः भवेयुः। दुष्टाः राजद्रोहिणः



च कठोरं दण्डनीयाः। किं निर्वीर्यः भवान्? ते लुण्ठाकाः कथमपि गृहीतव्याः एव। ते कति सन्ति, तेषां मूलं कुत्र, तेषां बलं कियत्, तेषां प्रोत्साहकाः के, इत्यादिकं सर्वं ज्ञातव्यम्। एषः विरोधः समूलम् उन्मूलनीयः। ये तेषां साहाय्यं कुर्वन्ति ते कठोरं दण्डनीयाः। एतादृशेषु विषयेषु सेनापतिः सदापि क्रियाशीलः स्यात्। विरोधिनाम् अन्वेषणे दण्डने च असमर्थः सेनापतिस्थाने स्थातुं न अर्हति'' इति कोपेन कपालकण्ठं तर्जयन् अस्ति वीरसिंहः।

तावता कुतश्चित् वेगेन आगतः बाणः सभामण्डपस्य वातायनद्वारा अन्तः आगत्य भित्तौ सशब्दं लग्नः। बाणमूले लघुवस्त्रेण किमपि बद्धं दृश्यते स्म। अकस्मात् आगतस्य बाणस्य दर्शनेन सर्वे चकिताः।

वीरसिंहः अपि आश्चर्यचकितः सन् सिंहासनात् उत्थितवान्। सभ्याः अपि झटिति उत्थाय परितः दृष्टिं प्रसारितवन्तः।

कपालकण्ठः तं बाणं स्वीकर्तुं द्वित्राणि पदानि अग्रे स्थापितवान्। तत् दृष्ट्वा वीरसिंहः कोपेन– ''अये मूर्ख! तिष्ठतु तावत्'' इति कठोरस्वरेण आज्ञापितवान्।

वीरसिंहस्य आज्ञां श्रुत्वा कपालकण्ठः तत्रैव स्थितवान्। वीरसिंहस्य आशयः कः इति न ज्ञातं तेन।

''प्रथमं सः बाणप्रयोक्ता कः इति ज्ञात्वा आगच्छतु। राजभवनस्य अन्तः आगत्य बाणं प्रयुक्तवन्तं तम् अस्मदीयाः भटाः गृहीतवन्तः वा न वा इति पश्यतु।' कथमपि सः बाणप्रयोक्ता दुष्टः कारागारे स्थापनीयः। धावतु इतः, विलम्बं मा करोतु'' इति आज्ञापितवान् वीरसिंहः।

''एषः कश्चन मूढः सेनापतिः। सर्वथा अप्रयोजकः'' इति स्वगतम् उक्तवान् सः।

कपालकण्ठः तु खड्गम् आकृष्य हस्तेन गृहीत्वा बहिः धावितवान्। अन्ये केचन अधिकारिणः आयुधं गृहीत्वा तम् अनुसृतवन्तः।

तेषां निर्गमनं क्षणकालं पश्यन् स्थितः वीरसिंहः परिवृत्य भटान् आज्ञापितवान्– ''तं बाणम् अत्र मम समीपम् आनयन्तु तावत्'' इति।

वीरसिंहस्य प्रधानः अङ्गरक्षकः झटिति अग्रे गत्वा बाणम् आनीतवान्। बाणमूले बद्धं वस्त्रम् अपनीय तस्य अन्तः स्थितं तालपत्रं वीरसिंहस्य पुरतः स्थापितवान्।

पत्रे तु एवं लिखितम् आसीत्– "वयं कदापि कमपि न लुण्ठितवन्तः। भवन्तः एव सरलाभ्यः प्रजाभ्यः सर्वं लुण्ठितवन्तः। अतः लुण्ठाकाः भवन्तः एव, न तु वयम्। प्रजाभिः महता परिश्रमेण वर्धितं धान्यम् अन्याय्येन स्वायत्तीकर्तुं नास्ति भवताम् अधिकारः। धान्यं विक्रीय आयुधानि क्रेतव्यानि इति भवतां चिन्तनम्। किन्तु प्रजाः अन्नवस्त्रादिकम् इच्छन्ति, न तु आयुधानि। अतः प्रजानां हितार्थं भवतां प्रयत्ने अवरोधः कृतः अस्माभिः। एतेन क्रमेण अपराधः ज्ञापितः अपि। इतः परं वा विवेकं प्राप्य सन्मार्गे गतं चेत् भवतां हितं सिध्येत्" इति।

पत्रं पठितवतः वीरसिंहस्य नेत्रे रक्ते जाते। सभायां क्षणद्वयं यावत् मौनं प्रसृतम्।

बाणप्रयोक्तारं कपालकण्ठः बद्ध्वा आनयति इति विचिन्त्य वीरसिंहः द्वारप्रदेशम् एव पश्यन् स्थितवान्। किन्तु राजभटैः सह गतः कपालकण्ठः पञ्चनिमेषानन्तरम् अपि न प्रत्यागतः।

वीरसिंहस्य कोपः तु क्षणे क्षणे वर्धते। सः कोपेन कम्पमानः– "अहो ज्ञातं मया। सर्वं ज्ञातम्। लुण्ठाकैः धान्यानि स्वायत्तीकृतानि इति मया उक्तं खलु? तत् श्रुत्वा अत्रत्यः एव कश्चित् बाणं प्रयुक्तवान्। एतत् पत्रम् अपि तेनैव लिखितम्। तदपि अत्र आगत्य एव! सः



निश्चयेन शत्रुपक्षीयः एव। मम नेत्रयोः पुरतः एव शत्रुपक्षीयः कश्चित् बाणप्रयोगं कृतवान्। कीदृशम् अपमाननम्! अक्षम्यः अपराधः एषः। सः कुत्र गतः इति पश्यन्तु। तं ताडयन्तु। मारयन्तु। मास्तु, मास्तु, तस्य मारणं मास्तु। सः कारागारे स्थापनीयः। तस्य मुखात् रहस्यं निस्सारणीयम्। शत्रूणां योजना ज्ञातव्या। तं बद्ध्वा आनयन्तु अत्र। तस्य दन्तान् भञ्जयन्तु। नासिकां कर्तयन्तु'' इति उन्मत्तः इव आक्रोशनं कृतवान्।

तावता कपालकण्ठः तदनुचराः च प्रत्यागतवन्तः।

''कुत्र सः द्रोही? तं मारितवन्तः वा भवन्तः? तस्य मुखात् सर्वं वाचनीयम् आसीत् खलु? किं प्रवृत्तम्? वदन्तु रे मूर्खाः ...'' इति कोपेन पृष्टवान् वीरसिंहः।

''महाप्रभो! सः अस्माभिः न मारितः। सः उपायेन इतः पलायितवान्। वातायनद्वारा बाणप्रयोगं कुर्वन्तं तं दुष्टं दृष्ट्वा कश्चन भटः तं गृहीतवान्। किन्तु तावता बाणप्रयोगं समाप्य सः दुष्टः तं भटं तत्रैव पातयित्वा अश्वम् आरुह्य पलायितवान्'' इति निवेदितवान् कपालकण्ठः।

''शत्रुः अश्वम् आरुह्य धावितः चेत् तस्य अनुधावनार्थम् अस्मत्समीपे अश्वाः किं न सन्ति? कीदृशी अविवेकिता!'' इति उक्तवान् वीरसिंहः।

''अस्माकं सैनिकाः अश्वशालां गत्वा अश्वम् आनीतवन्तः। किन्तु तदभ्यन्तरे शत्रुः अदृश्यतां गतः आसीत्। सः केन मार्गेण पलायितः इति केनापि न ज्ञातम्'' इति वस्तुस्थितिं निवेदितवान् कपालकण्ठः।

''शत्रौ निर्गते, दुर्गद्वारस्य पिधानम्! किम् एतेन? तं भटं शूलम् आरोपयतु। तम् अश्वं द्विधा च्छित्वा दूरं क्षिपतु'' इति क्रोधेन आदिष्टवान् वीरसिंहः।

वीरसिंहस्य कोपवचनानि श्रुत्वा सर्वे सभ्याः भीताः। कस्यापि मुखतः किमपि न निस्सरति। ते परस्परं मुखं पश्यन्तः मौनं स्थितवन्तः।

–(अनुवर्तते)






# उत्तराधिकारिपरीक्षा

**प्रा**णरहितं शवम् आश्रित्य स्थितः एषः वेतालः माम् एव जेतुं प्रयतते। किन्तु कथमपि एषः मया जेतव्यः एव इति भावयन् इव त्रिविक्रमः पुनरपि वृक्षस्य समीपं गतवान्। वृक्षम् आरुह्य शवं स्कन्धे आरोप्य अधः आगतवान्। अनन्तरं मौनं श्मशानाभिमुखं प्रस्थितवान् च। तदा शवान्तर्गतः वेतालः अवदत्– "अये राजन्! राजानः चञ्चलचित्ताः इति प्राज्ञाः वदन्ति। राजा भवान् अपि चञ्चलचित्तः स्यात् वा इति मम सन्देहः। चञ्चलचित्ताः जनाः कदाचित् उद्दिष्टं फलं प्राप्य अपि अन्यथा व्यवहरन्ति। अत्र उदाहरणरूपेण राज्ञः चन्द्रदेवस्य कथां श्रावयामि। मार्गायासपरिहारार्थं कथां श्रद्धया शृणोतु तावत्" इति।

अनन्तरं वेतालेन कथा आरब्धा–

पूर्वं दक्षिणावतीनामकं राज्यं चन्द्रदेवः नाम राजा पालयति स्म। तस्य पुत्र्याः नाम



लक्ष्मीदेवी। राज्ञः अन्यत् अपत्यं नास्ति।

राज्ञः दूरबन्धुवर्गे जातौ महाबलः वीरबाहुः च राजप्रासादे एव निवसतः। तौ आकारेण सुन्दरौ बुद्धिमत्तया अद्वितीयौ च। उभौ अपि विनयशीलौ, सर्वासु विद्यासु निपुणौ च। एतयोः अन्यतरः जामाता भवितुम् अर्हति इति चिन्तयति राज्ञी। अत एव सा उभौ अपि समानया प्रीत्या पश्यति।

कदाचित् राज्ञी राजानम् उक्तवती– "अस्माकं पुत्री प्राप्तवयस्का अस्ति। अतः इतः परं विलम्बः न करणीयः। महाबलः वीरबाहुः च कथञ्चित् प्रासादे एव निवसतः। अतः तयोः अन्यतराय राजकुमारी दत्ता चेत् वरं स्यात्" इति।

एतत् श्रुत्वा राजा मन्दहासपूर्वकम् उक्तवान्– "देवि! भवत्याः वचनं युक्तम् एव। तौ उभौ अपि जामातृस्थानं प्राप्तुम् अर्हौ। किन्तु तयोः कतरः जामातृत्वेन अङ्गीकरणीयः? भवती किं चिन्तयति एतद्विषये? विवाहविषये गृहिण्याः विचारस्य एव प्रामुख्यं स्यात् इति प्राज्ञाः वदन्ति। अतः भवती प्रथमं स्वाभिप्रायं प्रकटयतु" इति।

"तौ उभौ अपि गुणेन तुल्यौ। तथापि मम तु वीरबाहुविषये एव अधिकः आदरः। सः महाबलस्य अपेक्षया अपि रूपेण श्रेष्ठः। अन्यच्च 'कन्या वरयते रूपम्' इति वचनं श्रुतं खलु भवता? अतः वीरबाहुः एव जामाता भवतु इति मम इच्छा" इति राजानम् उक्तवती राज्ञी।

तदा राजा मन्दहासपूर्वकम् उक्तवान्– "वीरबाहौ भवत्याः आदरातिशयः वा? मम तु महाबले अधिकः आदरः। भवती रूपं दृष्ट्वा श्रेष्ठत्वं निर्णीतवती। किन्तु रूपवान् अर्हतावान् भवति एव इति निश्चयः नास्ति खलु? रूपवान् नीचप्रवृत्तिमान् भवेत्, कुरूपी च नीतिमान् भवेत्। अतः रूपदर्शनेन कस्यचित् स्वीकारः निराकरणं वा न उचितम्। रूपम् अशाश्वतं, गुणाः शाश्वताः। व्यक्तिचयनसन्दर्भे गुणाः परिशीलनीयाः" इति।

"भवदुक्तं युक्तम् एव। वीरबाहुः सुन्दरः गुणवान् च अस्ति इति मम अभिप्रायः" इति



उक्तवती राज्ञी।

"किमर्थं वृथा चर्चा? मम महाबले आदरः, भवत्याः तु वीरबाहौ। अतः कः योग्यः इति परीक्षाद्वारा एव निर्णयाम। भवतु खलु?" इति उक्तवान् राजा।

अनन्तरदिने राजा वीरबाहुं महाबलं च स्वसमीपम् आहूय उक्तवान्– "अस्माकं राज्यस्य सीमायां धान्यकूटं नाम कश्चन विशालः ग्रामः अस्ति इति भवद्भ्यां ज्ञायते खलु? तस्मात् ग्रामतः करः अद्यावधि न आगतः। अन्येभ्यः सर्वेभ्यः ग्रामेभ्यः करः आगतः। धान्यकूटग्रामे अधिकारिणः किं कुर्वन्तः सन्ति इति न ज्ञायते। ते करसङ्ग्रहणे असमर्थाः जाताः वा, उत वाममार्गम् आश्रितवन्तः वा, उत चौर्यं किमपि प्रवृत्तं स्यात् वा इति मम सन्देहः। अतः भवद्भ्यां स च ग्रामः गन्तव्यः। दक्षिणोत्तरं प्रसृतस्य तस्य ग्रामस्य दक्षिणभागे करसङ्ग्रहणदायित्वं महाबलः निर्वहतु। उत्तरभागे च वीरबाहुः निर्वहतु" इति।

तौ एतत् कार्यं विनयेन अङ्गीकृत्य तस्मिन् एव दिने राजधानीतः प्रस्थितवन्तौ।

प्रस्थातुम् उद्युक्तौ तौ उक्तवान् आसीत् राजा– "धान्यकूटग्रामे वसत्यर्थम् अस्मदीयम् एव भवनं व्यवस्थापितम् अस्ति। प्रत्यागमनसमये भवद्भ्यां सहैव आगन्तव्यम्। अन्यच्च भवद्भ्यां सह अङ्गरक्षकाः न प्रेष्यन्ते। तत्र कारणम् अपि अस्ति। एतस्य कार्यस्य फलस्य आधारेण भवतोः भाविजीवनं निर्णीतं भविष्यति। एतेन कार्येण भवतोः शक्तेः अपि परीक्षा भविष्यति। भवद्भ्याम् आत्मरक्षणं स्वयं करणीयम्। कररूपेण सङ्गृहीतं धनम् अपि सुरक्षितरूपेण स्वशक्त्या एव आनेतव्यम्। कार्यस्य फलं दृष्ट्वा भवतोः अन्यतरं सेनापतिं करिष्यामि। अपरस्य विषये अनन्तरं कथयिष्यामि" इति।

वीरबाहुः महाबलः च महाराजस्य वचनं श्रुत्वा महता सन्तोषेण धान्यकूटग्रामं गतवन्तौ।

राजा मन्त्रिणः पुत्रं कृष्णकुमारं स्वसमीपम् आहूय उक्तवान्– "भवता वेषान्तरेण तौ



अनुसरणीयौ। तौ किं कुरुतः इति जागरूकतया परिशील्य प्रत्यागत्य निवेदनीयम्" इति।

वीरबाहुः महाबलः च धान्यकूटं प्राप्तवन्तौ। करसङ्ग्रहाधिकारिणः आगत्य तत्रत्यां परिस्थितिं निवेदितवन्तः। पादोनभागः करः एतावता एव सङ्गृहीतः आसीत्। अन्ये ग्रामीणाः करदाने विलम्बं कृतवन्तः इत्यतः राजधानीं प्रति सङ्गृहीतस्य करस्य प्रेषणे अपि विलम्बः जातः आसीत्। सर्वैः अधिकारिभिः प्रामाणिकबुद्ध्या कार्यं कृतम् आसीत्। एतयोः आगमनस्य अनन्तरं सप्ताहाभ्यन्तरे करसङ्ग्रहकार्यं पूर्णतः समाप्तम्।

वसतिभवने पृथक् पृथक् प्रकोष्ठे वीरबाहु-महाबलयोः निवासः। अनन्तरदिने प्रस्थानार्थं तौ सन्नाहं कुर्वन्तौ आस्ताम्। मध्यरात्रसमये कोऽपि आगत्य वीरबाहोः प्रकोष्ठस्य द्वारस्य शब्दं कृतवान्। वीरबाहुः उत्थाय द्वारम् उद्घाटितवान्। तावता अवगुण्ठनधारी कश्चित् अन्तः प्रविश्य खड्गं प्रदर्शयन् धनस्यूतं स्वीकृत्य बहिः गत्वा द्वारशृङ्खलया द्वारं कीलयित्वा वेगेन ततः पलायितवान्।

अचिन्तिततया एतया घटनया दिग्भ्रान्तः वीरबाहुः क्षणकालस्य अनन्तरम् उच्चैः आक्रोशनं कृतवान्। तत् श्रुत्वा धावनपूर्वकम् आगताः रक्षकभटाः प्रकोष्ठस्य द्वारम् उद्घाटितवन्तः।

ततः अल्पे एव काले महाबलः अपि तत्र आगतः। वीरबाहुः सर्वेषां पुरतः प्रवृत्तं समग्रं निवेदितवान्।

एतत् श्रुत्वा रक्षकभटानां नायकः आश्चर्येण– "एतस्मिन् प्रदेशे ऐदम्प्राथम्येन चौर्यं प्रवृत्तम्। तत्रापि राजसम्बन्धिभवने महाराजेन प्रेषितस्य विशेषाधिकारिणः प्रकोष्ठे चौर्यम्! एवं चौर्यं कृतवान् कश्चित् चोराग्रेसरः एव स्यात्" इति।

अनन्तरदिने सूर्योदयस्य अनन्तरं वीरबाहुः महाबलः च राजधानीं प्रति प्रस्थितवन्तौ। मार्गे अन्यः कोऽपि अपायः न प्रवृत्तः।

महाबलः आत्मना आनीतं धनस्यूतं

महाराजस्य पुरतः स्थापितवान्। वीरबाहुः तु लज्जया शिरः अवनमय्य अश्रुपूर्णनेत्रः मौनं स्थितवान्।

तदा राजा सान्त्वनपूर्वकं वीरबाहुम् उक्तवान्– "वृथा चिन्तां मा करोतु। भवतः स्थाने अहं स्थितः चेदपि एवम् एव अभविष्यत्। रक्षकभटेषु सत्सु अपि एवं चौर्यं भवेत् इति केनापि न तर्कितम् आसीत् खलु?" इति।



एतत् श्रुतवतः वीरबाहोः खेदः किञ्चिदिव न्यूनः जातः। 'अहं राज्ञः असमाधानस्य पात्रं तु न जातः' इति चिन्तयन् सः स्ववसतिं गतवान्। महाबलः तम् अनुसृतवान्।

तस्मिन् दिने सायङ्काले कृष्णकुमारः राज्ञः समीपम् आगत्य धनस्यूतं पुरतः स्थापयन्– "वीरबाहोः सकाशात् यत् चोरितं तत् धनम् एतत्" इति उक्तवान्।

"एवं तर्हि वीरबाहुतः भवान् धनम् अपहृतवान् वा?" इति आश्चर्येण पृष्टवान् राजा।

"तथा करणीयम् इति भवतः आदेशः न आसीत् खलु? अतः मया चौर्यं न कृतम्। चौर्यं कृत्वा अन्धकारे धावन्तं चोरं गृहीत्वा ततः एतत् धनं वशीकृतम्" इति उक्तवान् कृष्णकुमारः।

"चोरः किमर्थं न गृहीतः भवता?" इति पृष्टवान् राजा।

"तस्य ग्रहणार्थं प्रयत्नः न कृतः मया। यदि अहम् इच्छेयं तर्हि तस्य ग्रहणं मारणं वा अकरिष्यम् एव। धनग्रन्थेः आकर्षणसमये तस्य अवगुण्ठनम् अपि आकृष्टं मया। अतः सः कः इति मया ज्ञातम्। तेन तस्यैव वसतिगृहस्य अन्यः प्रकोष्ठः प्रविष्टः" इति उक्तवान् कृष्णकुमारः।

"तस्यैव वसतिगृहस्य प्रकोष्ठः प्रविष्टः वा तेन? सत्यं वा एतत्?" इति आश्चर्येण पृष्टवान् राजा।

"तस्मिन् एव वसतिगृहे वीरबाहोः प्रकोष्ठस्य पार्श्वे स्थितः प्रकोष्ठः एव प्रविष्टः" तेन उक्तवान् कृष्णकुमारः।

राजा क्षणकालम् आलोच्य उक्तवान्– "तथापि भवता सः चोरः गृहीतः चेदेव वरम्



अभविष्यत्। यतः तेन सामान्यः अपराधः न कृतः, अपि तु घोरः अपराधः कृतः" इति।

"सः भवत्समीपम् आगमिष्यति एव इति मम विश्वासः आसीत्। 'यथायोग्यं भवान् एव तं दण्डयतु' इति निश्चित्य अहं तं न गृहीतवान्। अन्यच्च अन्धकारे वेषान्तरेण स्थितं मां सः न अभिज्ञातवान्। माम् अपि कञ्चन चोरं भावितवान् स्यात् सः" इति उक्तवान् कृष्णकुमारः।

तस्मिन् दिने रात्रौ राजा राज्ञीम् उक्तवान्– "राज्यस्य उत्तराधिकारी कः भवेत् इति निर्णीतं मया। भवत्या अपि मम निर्णयः अवश्यम् अनुमन्येत इति अहं भावयामि" इति।

"परीक्षायां वीरबाहुः पराजितः अभवत्। महाबलः एव उत्तराधिकारी भविष्याति। एषः एव भवतः निर्णयः। एवं खलु?" इति उक्तवती राज्ञी।

"नैव। मम दृष्ट्या तौ उभौ अपि अनर्हौ एव। कृष्णकुमारः एव उत्तराधिकारी भवितुं योग्यः। सः कार्याकार्यविवेकी धैर्यशाली च। दत्तस्य कार्यस्य निर्वहणसन्दर्भे कियत् स्वातन्त्र्यं स्वीकरणीयं, कुत्र मौनं स्थातव्यम् इति जानाति सः। दुराशालेशः अपि नास्ति तस्मिन्। प्रामाणिकः नीतिनिपुणः च सः। अतः सः एव राज्यस्य उत्तराधिकारी भवितुम् अर्हति" इति उक्तवान् राजा।

राज्ञी क्षणकालस्य मौनस्य अनन्तरम् उक्तवती– "भवतः निर्णयः ममापि अनुमतः एव। एवं प्रवर्तेत इति मया स्वप्ने अपि न चिन्तितम् आसीत्। अन्यच्च राजकुमारी कृष्णकुमारे अनुरागवती इति ह्यः मया ज्ञातम्। वीरबाहौ महाबले च मम दृष्टिः आसीत् इत्यतः एषः अंशः मया नैव लक्षितः आसीत्" इति।

अनन्तरम् अल्पे एव काले युवराज्ञी–कृष्णकुमारयोः विवाहः सवैभवं सम्पन्नः।

वेतालः एवं कथां समाप्य अवदत्– "अये राजन्! कृष्णकुमारेण यत् कृतं तत् तु सामान्यः अधिकारी अपि कुर्यात् एव। तस्य व्यवहारे किं वैशिष्ट्यम् आसीत्? सः कर्तव्यशीलः धैर्यशाली च इत्यत्र तु तस्य

व्यवहारः प्रमाणम्। किन्तु दुराशारहितः प्रामाणिकः नीतिमान् इत्यत्र कः आधारः? कृष्णकुमारस्य कं व्यवहारं दृष्ट्वा राजा तथा निर्णीतवान्? राज्ञा अनुचितः निर्णयः स्वीकृतः वा? एतेषां सर्वेषां सन्देहानां योग्यं परिहारं जानन् अपि भवान् यदि न वदेत् तर्हि भवतः शिरः सहस्रधा भग्नं भवेत्'' इति।

तदा मौनं स्थातुम् अशक्तः त्रिविक्रमः एवम् उक्तवान्– ''वीरबाहोः प्रकोष्ठतः धनं चोरितवान् महाबलः एव इति तु सुस्पष्टम्। 'आत्मनः सामर्थ्यातियशं, वीरबाहोः असामर्थ्यं च निरूपणीयम्' इति चिन्तयन् सः तथा कृतवान्। किन्तु एतया घटनया उभयोः अपि असामर्थ्यं प्रमाणितम् अभवत्। आयुधहस्तः अपि वीरबाहुः स्वसमीपे स्थितं धनं रक्षितुं न शक्तवान्। अतः तस्य असामर्थ्यं प्रमाणितम् अभवत्। महाबलः तु नीचे चौर्ये उद्युक्तः सन् स्वस्य अनर्हतां प्रदर्शितवान्। कृष्णकुमारः तु विवेकेन धैर्येण च व्यवहृतवान्। महाबलः एव चोरः इति जानन् अपि सः तम् अंशं धान्यकूटग्रामे इतरत्र वा न प्रकाशितवान्। राज्ञः पुरतः केवलम् उक्तवान्। 'योग्यं दण्डनं राजा एव विधास्यति' इति चिन्तितवान् सः। सर्वेषु कार्येषु औचित्यं पालनीयं भवति। कृष्णकुमारः स्वस्य अधिकारस्य औचित्यं जानन् विवेकेन व्यवहृतवान्। महाबलतः यदा धनं वशीकृतं तदा कृष्णकुमारः वेषान्तरेण आसीत्। अतः सः केनापि न अभिज्ञातः। सः तत् धनं स्वसमीपे एव स्थापयति चेदपि कोऽपि ज्ञातुं न शक्नोति स्म। किन्तु सः तत् धनं राज्ञे अर्पयन् स्वस्य प्रामाणिकतां प्रमाणीकृतवान्। एतत् सर्वं दृष्ट्वा एव राजा कृष्णकुमारम् उत्तराधिकारिणं निश्चितवान्'' इति।

एवं वदता त्रिविक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवान्तर्गतः वेतालः ततः अदृश्यः भूत्वा यथापूर्वं वृक्षस्य शाखाम् अवलम्बितवान्।

(मूलकथा – **मनोजदासस्य**)



# आत्मज्ञानम्

कश्चन कृषिकः सस्यसमृद्धं स्वस्य क्षेत्रं रक्षन् आसीत्। कश्चन संन्यासी तेन मार्गेण आगत अनन्तरं सः कृषिकः संन्यासी च विश्रान्त्यर्थं वृक्षस्य अधः उपविष्टवन्तौ।

संन्यासी कृषिकं उक्तवान्– "एतत् क्षेत्रं भवतः एव खलु? फलसमृद्धिः सम्यक् स्यात् खलु? वृष्टिः समये भवेत् इति भाति" इति।

तदा कृषिकः उक्तवान्– "श्रीमन्! फलं यदा हस्तगतं भविष्यति तदा एव ज्ञायते – फलसमृद्धिः अस्ति उत न इति। यतः वृष्टिः कदा कीदृशी भवेत् इति न ज्ञायते खलु केनापि? तदस्तु, कं प्रदेशम् उद्दिश्य भवतः प्रयाणम्?" इति।

संन्यासी दूरात् दृश्यमानं पर्वतं पश्यन् सनिःश्वासम् उक्तवान्– "तस्मिन् पर्वते कश्चन सिद्धपुरुषः अस्ति इति श्रूयते। ततः आत्मज्ञानं प्राप्तुं तत्र गच्छन् अस्मि। इतः पूर्वं मया त्रयः गुरवः सेविताः। किन्तु कस्माच्चित् अपि आत्मज्ञानं न प्राप्तम्। इदानीम् अपि न जाने, आत्मज्ञानं प्राप्येत वा न वा इति" इति।

तदा कृषिकः हसन्– "श्रीमन्! चत्वारिंशद्वर्षेभ्यः कृषिकार्यं कुर्वन् अस्मि। जन्मनः आरभ्य वृष्टिं पश्यन् अस्मि। एवं सुदीर्घः स्वानुभवः अस्ति चेदपि, कदा कीदृशी वृष्टिः स्यात्, कीदृशं फलं प्राप्येत इति निश्चयेन वक्तुं न शक्नोमि। भवान् तु अन्येन प्राप्तस्य अनुभवस्य आधारेण आत्मज्ञानं प्राप्तुं प्रयतमानः अस्ति। अतः भवता साफल्यं कदा प्राप्येत इति मया तु न ज्ञायते" इति उक्तवान्।

एतत् वचं श्रुतवति संन्यासिनि ज्ञानम् उदितम्। 'आत्मज्ञानं स्वप्रयत्नेन एव प्राप्तव्यम्' इति निश्चित्य सः कृषिकं कृतज्ञतावचनानि उक्त्वा अन्यस्यां दिशि निर्गतवान्।



# ज्ञानभाण्डागारम्

## सः कः स्यात्?

भारतस्य प्रथमस्वातन्त्र्यसङ्ग्रामस्य कालः। सैनिकाः शासनं विरुध्य व्यवहरन्तः आसन्। लघुराज्यस्य राजा कश्चित् शासनविरोधव्यवहारे प्रमुखः आसीत्। सः शत्रुभिः युद्धं कुर्वन् आसीत्। तस्मिन् एव समये ईस्ट् इण्डिया कम्पनी सेना तस्य राज्यस्य उपरि आक्रमणम् अकरोत्। एतां वार्तां श्रुत्वा सः राजा स्वराज्यं गन्तुम् उद्युक्तः। किन्तु सः ततः अग्रे गन्तुं यथा न शक्नुयात् तथा आंग्लसेना युद्धं कुर्वती आसीत्। तथापि सः युद्धं कुर्वन् एव क्रमशः अग्रे गतवान्। शत्रुभिः प्रयुक्तानि गोलकास्त्राणि तस्य दक्षिणहस्ते लग्नानि। तस्य स्थितिः एवं जाता यत् दक्षिणहस्तः न च्छेदितः चेत् मरणं भवेत्।

शस्त्रचिकित्सार्थं वैद्यानाम् आनयनार्थं वा समयः नास्ति। अतः सः गङ्गातीरे स्थित्वा वामहस्तेन खड्गम् उन्नीय– "मातः! एतत् उपायनं स्वीकरोतु" इति वदन् एकेन एव प्रहारेण दक्षिणहस्तं छिन्नवान्।

यदि सः युवकः स्यात् तर्हि हस्तच्छेदस्य अनन्तरम् अपि प्राणान् धरेत्। किन्तु एषः वीरः पञ्चसप्ततिवर्षीयः। अतः एतदनन्तरदिने एव सः प्राणैः वियुक्तः अभवत्। वदन्तु, सः वीरः कः स्यात्? (उत्तरं ३६तमे पृष्ठे)

## भवन्तः जानन्ति वा?

१. 'बहाम्' मतस्य स्वरूपं किम्?
२. बहाम्मन्दिरम् अस्माकं देशे कुत्र अस्ति?
३. 'डयमानाः शरावाः' सर्वप्रथमं केन दृष्टाः?
४. तेन कदा ते शरावाः दृष्टाः?
५. 'डयमानाः शरावाः' इति नाम तेषां किमर्थं जातम्?

(उत्तराणि ३६तमे पृष्ठे)

# कामरूपराज्यम्

अस्माकं पुराणेषु प्रस्तुतेषु सुप्रसिद्धेषु राज्येषु अन्यतमम् अस्ति कामरूपं, यस्य च राजधानी आसीत् – प्राग्ज्योतिषपुरम्।

अत्र प्रार्थितं सर्वं प्राप्यते स्म इत्यतः कामरूपम् इति एतस्य नाम इति केचन जनाः वदन्ति।

अन्ये केचन एतत्सम्बन्धे पुराणकथां काञ्चित् प्रस्तुतीकुर्वन्ति।

ते वदन्ति– 'शिवस्य कोपाग्निना दग्धः कामः (मन्मथः) भस्मीभूतः जातः। अनन्तरं मन्मथपत्न्याः रतिदेव्याः तपसा सन्तुष्टः शिवः मन्मथम् उज्जीवितवान्। एवं मन्मथः अत्र स्वस्य रूपं पुनः प्राप्तवान् इत्यतः 'कामरूपम्' इति नाम' इति।

प्राग्ज्योतिषपुरस्य अर्थः तु– पूर्वस्यां दिशि स्थितं ज्योतिःस्वरूपं नगरम् इति।

प्राचीनं कामरूपराज्यम् इदानीम् अस्सांराज्यनाम्ना व्यवह्रियते। प्राग्ज्योतिषपुरं च गौहातीनगरनाम्ना व्यवह्रियते। गौहातीसमीपे पर्वतस्य उपरि कामरूपराज्यस्य अधिदेवतायाः 'कामाक्षस्य' मन्दिरम् अस्ति।

पुराणकथाभिः ज्ञायते यत् प्रसिद्धः






## राक्षसगोधिकानिमित्तं खननम्

बहुपूर्वम् एतस्यां भूम्यां राक्षसगोधिकाः (डिनोसार्स्) निवसन्ति स्म। एतद्विषये अधिकं विषयं सङ्ग्रहीतुं विज्ञानिनः डेनवर्पर्वतप्रदेशे खननं कुर्वन्तः सन्ति। एतस्य पर्वतस्य उत्पत्तितः पूर्वम् एव – तन्नाम १४ कोटिवर्षेभ्यः पूर्वम् – एतस्मिन् प्रदेशे राक्षसगोधिकाः निवसन्ति स्म इति विश्वस्यते। अत्र तादृशीनां राक्षसगोधिकानाम् अस्थिपञ्जराणि प्राप्तानि सन्ति। एतस्य आधारेण केचन नूतनाः अंशाः प्रकाशिताः भवेयुः इति भाव्यते।



राक्षसः नरकासुरः मिथिलातः कामरूपम् आगतवान् इति। एतस्य पुत्रः भगदत्तः महाभारतयुद्धे कौरवपक्षम् आश्रित्य युद्धं कृत्वा दिवं गतः।

इतिहासात् ज्ञायते यत् समुद्रगुप्तस्य सामन्तराजः पुष्पवर्मा क्रि.श. चतुर्थे शतके एतस्य प्रदेशस्य शासकः आसीत् इति।

१३ शतके षानुवंशीयाः अहोमराजाः बर्मामार्गेण आगत्य अत्रत्यान् बहून् भूभागान् स्वाधीनीकृतवन्तः। तदारभ्य एतस्य प्रदेशस्य नाम 'अस्साम्' इति अभवत् इति श्रूयते।

असमा भूमिः अत्रत्या इत्यतः 'अस्साम्' इति नाम आगतम् इत्यपि केचन जनाः कथयन्ति।

१८२४ तमे वर्षे एषः प्रदेशः आंग्लानाम् अधीनः जातः।

अहोमराजाः कालान्तरे 'षान्'जातीयानि नामानि परित्यज्य हिन्दुनामानि एव धृतवन्तः। धैर्येण साहसेन च एते सुविख्याताः। यवनानां पठानजनानां च दुराक्रमणतः एते स्वप्रदेशान् रक्षितवन्तः आसन्।

इदानीम् अस्सांराज्यं ७,८५२३ वर्ग-कि.मी. विस्तृतम् अस्ति। गौहातीसमीपस्थं दिसपुरनगरम् एतस्य राज्यस्य नूतन-राजधानी अस्ति।

## न्यूनीक्रियमाणम् अस्ति दुर्व्यसनम्

अमेरिकादेशे गतवर्षे धूमपानरूपं दुर्व्यसनं ५% न्यूनं जातम् इति ज्ञायते। काचित् समितिः कथयति यत् अत्र १९८९ तमे वर्षे ५३,३०० कोटिमिताः धूमवर्तिकाः सेविताः इति। इदानीं तु धूमवर्तिकायाः उपयोगे ७% न्यूनता दृश्यते।



# सम्पादयेम वयं साहित्यज्ञानसम्पदम्

१. साहित्यकारनाम्ना आह्वातुं योग्यः आंग्लभाषायाः सर्वप्रथमः साहित्यकारः कः?

२. तेन लिखितस्य महाग्रन्थस्य नाम किम्?

३. तस्य ग्रन्थस्य वस्तु काल्पनिकम्, उत यथार्थघटनाधारितम्?

४. एतस्य ग्रन्थस्य नायकः कः?

५. फ्रेञ्च्भाषया आंग्लभाषया च कृतीः विरचय्य २१ तमे वयसि एव दिवं गतः भारतीयः साहित्यकारः कः?

## उत्तराणि

### सः कः स्यात्?

बिहारस्थं जगदीशपुरं पालितवान् राजा कुमार(कुन्वर्) सिंहः।

### सामान्यज्ञानम्

१. इरानदेशीयेन बहावुल्ला (१८१७-९२) वर्येण स्थातिम् एतत् सर्वधर्मसमानतां शान्तिप्रियतां च बोधयति।

२. नवदेहलीनगरे।

३. केनेत् अर्नाल्डनामकेन अमेरिकादेशीयेन वैज्ञानिकेन।

४. १९४७ तमे वर्षे जून्मासे।

५. जलस्य उपरि क्षिप्ताः शरावाः यथा मण्डूकप्लुत्या प्लवन्ते तथा एते डयमानाः दृष्टाः तेन वैज्ञानिकेन। अतः तथा नाम कृतम्।

### साहित्यज्ञानम्

१. डेनियल् डीफो।

२. राबिन्सन् क्रूसो इति।

३. यथार्थघटनाधारितम्।

४. अलेक्साण्डर् नेल्कीर्कनामकः नाविकः।

५. तोरूदत्तः।



# श्रीरामकृष्णपरमहंसः

अस्माकं देशे ये महात्मानः जन्म प्राप्तवन्तः तेषु सुविख्यातः अस्ति रामकृष्णपरमहंसः। यदा सः जीवति स्म तदा तं बहवः न जानन्ति स्म। किन्तु अनन्तरकाले तदीयः प्रधानशिष्यः विवेकानन्दः अन्यैः शिष्यैः सह रामकृष्णपरमहंसस्य सन्देशं देशे विदेशे च प्रसारितवान्।

बङ्गालप्रदेशे कमर्पुकूरं नाम कश्चन ग्रामः। तत्र खुदीरामः नाम कश्चन ब्राह्मणः निवसति स्म। कदाचित् सः तीर्थक्षेत्राणि द्रष्टुम् इच्छन् गृहात् प्रस्थितवान्। तत्समये तेन कश्चन अपूर्वः स्वप्नः दृष्टः। स्वप्ने महाविष्णुः प्रत्यक्षीभूय सूचितवान् यत् अहं भवतः पुत्ररूपेण जन्म प्राप्स्यामि इति।





खुदीरामस्य पत्नी चन्द्रादेवी १८३६ तमे वर्षे फेब्रवरीमासे १७ दिनाङ्के तृतीयसन्तानरूपेण एकं पुत्रं प्रसूतवती। पिता पुत्रस्य नाम गदाधरः इति निश्चितवान्। गदाधरः इति भगवतः विष्णोः अपरं नाम। शिशोः जन्मकुण्डलीं परिशील्य ज्योतिषिकाः उक्तवन्तः यत् एषः कश्चन प्रसिद्धपुरुषः भविष्यति इति।



गदाधरः यथा यथा प्रवृद्धः तथा तथा जनप्रियः अपि जातः। तद्ग्रामीणाः स्त्रियः तस्मिन् विशेषतः स्निह्यन्ति स्म। बाल्यतः अपि गदाधरः बुद्धिमान् चतुरः च आसीत्। क्रीडने तरणे चापि तस्य विशेषासक्तिः आसीत्।

गदाधरः इदानीं सप्तवर्षीयः बालकः। कदाचित् सः क्षेत्रे विहारं कुर्वन् आसीत्। कृष्ण-नीलान् मेघान् स्पृशन्तः पक्षिणः आकाशे डयमानाः आसन्। एतत् दृष्टवतः गदाधरस्य मनसि कश्चन मधुरः भावः। परमानन्दसागरे निमग्नः अस्ति सः। जीवने ऐदम्प्राथम्येन तेन एतादृशः विचित्रः अपूर्वः च अनुभवः प्राप्तः अस्ति। एषा एव समाधिस्थितिः इति उच्यते।





सः मूर्च्छितः सन् पतितः। तदीयाः सुहृदः तम् उन्नीय गृहं नीतवन्तः। किञ्चित्कालानन्तरं गदाधरः सचेतनतां प्राप्तवान्, मन्दहासपूर्वकं परितः दृष्टवान् च। अनन्तरकाले सः तदा तदा एतादृशं समाधिस्थित्यनुभवं प्राप्नोति स्म।

कमर्पुकूरं कश्चन समृद्धः ग्रामः। तेन मार्गेण गच्छतां प्रयाणिकानां कृते तद्ग्रामीणः भूस्वामी एकां धर्मशालां निर्मितवान् आसीत्। तस्यां धर्म-शालायां सञ्चारशीलाः संन्यासिनः महात्मानः च सदापि निवसन्ति स्म। गदाधरः तां धर्मशालां गच्छति। महात्मनां वार्तालापं श्रद्धया शृणोति च। महात्मनां मुखात् प्रसङ्गवशात् कथाः अपि निर्गच्छन्ति। तासां श्रवणे गदाधरस्य महान् उत्साहः।





कदाचित् केचन संन्यासिनः कुतूहलवशात् गदाधरं संन्यासिवेषेण अलङ्कृतवन्तः। समग्रं शरीरं तत्र तत्र भस्मना लिप्तम् आसीत्। एतेन एव वेषेण गदाधरः गृहं गतवान्। दण्ड-कमण्डलुप्रभृतीनि गृहीत्वा संन्यासिवेषं धृत्वा गृहं प्रविष्टवन्तं गदाधरं दृष्ट्वा तदीया माता दिग्भ्रान्ता।

अष्टवर्षीयः गदाधरः महतीम् अपि समस्यां लीलया परिहरति स्म। कदाचित् तद्ग्रामीणः भूस्वामी पण्डितैः सह उपविश्य समस्यायाः कस्याश्चित् परिहारोपायं चिन्तयन् आसीत्। तत्समये तत्र उपस्थितः गदाधरः लीलया तस्याः समस्यायाः परिहारार्थं मार्गं सूचितवान्। एतत् दृष्ट्वा तत्र सम्मिलिताः सर्वे आश्चर्यचकिताः।





ग्रामे कश्चन उत्सवः आचर्यमाणः आसीत्। मित्राणाम् आग्रहेण प्रेरितः गदाधरः शिवाजीवेषं धृत्वा रङ्गस्थलम् आरूढवान्। किन्तु तत्रैव समाधिस्थितिं प्राप्तवान्। कार्यक्रमः मध्ये एव स्थगितः अभवत्।

गदाधरस्य पिता दिवङ्गतः। अग्रजेन रामकुमारेण सह गदाधरः कलकत्तानगरम् आगतवान्। नगरे उन्नतानि भवनानि, इतस्ततः वेगे चलन्ति वाहनानि, सदा कार्यव्यग्रान् जनान् च दृष्ट्वा सः आश्चर्यचकितः।





रामकुमारः तत्र एकां लघु-संस्कृतपाठशालाम् आरब्धवान्। गदाधरः अपि तस्याम् एव शालायां पठति। किञ्चित्कालानन्तरं सः अग्रजम् उक्तवान्– "मह्यम् एतादृशः पाठः न रोचते। वास्तविकस्य सत्यस्य ज्ञानात् ऋते अन्यत् किमपि न इच्छामि अहम्" इति।

–(अनुवर्तते)



# न्यायनिर्णयः

गोवर्धनगिरिनामकं राज्यं नरेन्द्रभूपालः नाम राजा पालयन् आसीत्। सः तीक्ष्णमतिः दयालुः च। न्यायदानविषये नरेन्द्रभूपालस्य विशेषसामर्थ्यम् आसीत्। सः विविधैः उपायैः वास्तविकम् अपराधिनं जानाति, तं कठोरं दण्डयति च। निरपराधिनः कदापि दण्डिताः यथा न भवेयुः तथा विशेषजागरूकतां वहति राजा। प्रतिदिनं प्रातः निश्चिते समये यः कोऽपि आगत्य राजानं साक्षात् स्वसमस्यां निवेदयितुम् अर्हति स्म। एताः समस्याः राजा आसक्त्या शृणोति। स्वस्य बुद्धिमत्तायाः आधारेण अल्पे एव काले ताः समस्याः परिहरति सः।

कदाचित् प्रातःकाले रुक्मिणी नाम काचित् स्त्री राजानं द्रष्टुम् आगतवती। तत्समये राजा मन्त्रिणा सह समालोचनं कुर्वन् आसीत्। आगतां महिलां दृष्ट्वा राजा पृष्टवान्– "भद्रे! का भवती? का समस्या भवत्याः?" इति।

"प्रभो, मम नाम रुक्मिणी इति। मम पतिः रामचन्द्रः प्रतिदिनं नदीमार्गेण नगरं गत्वा वाणिज्यं समाप्य रात्रौ प्रत्यागमिष्यति। किन्तु ह्यः प्रातः गृहात् निर्गतः मम पतिः नदीतरणसमये नद्यां पतितः इति श्रुतम्" इति रुदती उक्तवती रुक्मिणी।

"खेदावहः विषयः एषः। किन्तु अत्र अपरिहार्या समस्या का अस्ति?" इति पृष्टवान् राजा।

"आर्यपुत्रः नद्यां पतितः इति श्रुतं, किन्तु वस्तुस्थितिः अन्या एव इति ज्ञातम्। सीतारामः अस्माकं प्रतिवेशी। सः अपि प्रतिदिनं नदीमार्गेण नगरं गत्वा वाणिज्यं करोति। कदाचित् मम पतिः सः च एकया एव नौकया गच्छतः। पुनः कदाचित् भिन्नया

नौकया। ह्यः तु मम पतिः एकया नौकया गच्छन् आसीत्। सीतारामः अन्यया नौकया गतवान्। एवं दूरात् गच्छन् सः नाविकेन दण्डकेन नद्यां पात्यमानं मम पतिं दृष्टवान्। सः आगत्य मां सर्वं निवेदितवान्। वार्ताश्रवणसमनन्तरम् एव न्यायप्राप्त्यर्थम् अहम् अत्र आगता" इति निवेदितवती रुक्मिणी।

राजा झटिति तरणचतुरान् जनान् आहूय आज्ञापितवान् यत् एतस्याः पत्युः रामचन्द्रस्य शवस्य अन्वेषणं करणीयम् इति। अनन्तरम् अन्यं भटं सीतारामस्य आनयनार्थं प्रेषितवान्।

सीतारामः झटिति आगतवान्। राजानं नमस्कृत्य विनयेन प्रवृत्तं समग्रं निवेदितवान्– "महाराज! दण्डकः रामचन्द्रं बलात् पातयन् आसीत्। एतत् मया स्वयं दृष्टम्। सः रामचन्द्रस्य हस्तात् धनं बलात् स्वीकृत्य तं नद्यां पातितवान्। अहं दूरे आसं चेदपि तौ उभौ अपि सम्यक् एव अभिज्ञातुं शक्तवान्" इति।

तदा राजा रुक्मिणीं पृष्टवान्– "पत्या नीते स्यूते कति रूप्यकाणि कानि कानि च वस्तूनि आसन् इति भवती जानाति वा?" इति।

"आं महाराज! सर्वं सम्यक् जानामि। चत्वारिंशत् रूप्यकाणि, मम नूपुरद्वयं च आसन्। नूपरद्वयम् आधिरूपेण स्थापयित्वा ऋणं प्राप्तुं मम पतिः नगरं गच्छन् आसीत्। एतत् कथमपि जानन् दण्डकः मम पतिं नद्यां



पातितवान् इति भाति'' इति उक्तवती रुक्मिणी।

एतावता द्वौ भटौ आगत्य राजानं निवेदितवन्तौ यत् रामचन्द्रस्य शवः प्राप्तः अस्ति इति। राजा मन्त्री च शवस्य दर्शनार्थं प्रस्थितवन्तौ। गमनसमये राजा भटं सूचितवान् आसीत् यत् दण्डकः अविलम्बेन अत्र आनेतव्यः इति। यावत् राजा शवं परिशील्य प्रत्यागतवान् ततः पूर्वं भटेन दण्डकः तत्र आनीतः आसीत्।

राजा दण्डकं पृष्टवान्– ''भवतः उपरि आरोपः अस्ति यत् भवान् रामचन्द्रनामकं वणिजं स्वनौकातः पातितवान् इति'' इति।

तदा दण्डकः झटिति उत्तरं दत्तवान्– ''महाराज! एषः मिथ्यापवादः। रामचन्द्रः मम नौकायाम् उपविश्य गच्छन् जलेन क्रीडन् आसीत्। तत्समये अकस्मात् सः नद्यां पतितः। धनस्यूतेन सह सः प्रवाहेण नीतः'' इति।

''एवं तर्हि तस्य रक्षणार्थं प्रयासः न कृतः वा भवता?'' इति पृष्टवान् राजा।

''कुतो न? मया तत्क्षणे एव प्रयत्नः कृतः। जले पतितस्य तस्य केशान् गृहीत्वा अहम् आकृष्टवान्। किन्तु तस्य केशाः आर्द्राः आसन्। अतः मम प्रयत्नः विफलः जातः'' इति आत्मानं समर्थितवान् दण्डकः।

एतत् श्रुत्वा नितरां कुपितः महाराजः क्रोधेन गर्जितवान्– ''अये मिथ्यावादिन्! भवान् एव तं मारितवान् इत्यत्र मम समीपे प्रमाणम् अस्ति। मिथ्यां मा वदतु। अपराधम्



अङ्गीकरोतु। अन्यथा भवान् कठोरैः दण्डैः दण्डितः भवेत्" इति।

तदा भीत्या कम्पमानः दण्डकः– "आं महाराज, मम विवेकः नष्टः आसीत्। अतः धनस्य आशया अहं रामचन्द्रं नद्यां पातितवान्" इति अपराधम् अङ्गीकृतवान्।

राजा दण्डकम् आजीवनकारागारवासेन कठिनश्रमेण च दण्डितवान्। रुक्मिणी प्रतिमासं राज्ञः धनागारतः जीवननिर्वहणार्थं धनं यथा प्राप्नुयात् तथा व्यवस्थाम् अपि कृतवान्।

मन्त्री राजानं पृष्टवान्– "प्रभो! दण्डकः एव अपराधी इति कथं ज्ञातं भवता?" इति।

तदा राजा हसन् उक्तवान्– "दण्डकः उक्तवान् यत् रामचन्द्रः धनस्यूतेन सह नद्यां पतितः इति। 'धनस्यूतेन सह' इति श्रवणात् एव मया चिन्तितं यत् एषः मिथ्यावादी इति। वस्तुतः तु घटनानिवेदनसमये धनस्यूतस्य प्रसक्तिः एव न आसीत्। रामचन्द्रस्य शवस्य दर्शनात तु मम सन्देहः दृढः जातः" इति।

"तत् कथम्?" इति पृष्टवान् मन्त्री।

"शवः तु भवता अपि दृष्टः एव। शवस्य चित्रं मम मनसि इतोऽपि स्पष्टम् अस्ति। दण्डकः उक्तवान् यत् नौकातः पतन्तं रामचन्द्रं दृष्ट्वा मया केशग्रहणपूर्वकं रक्षणार्थं प्रयत्नः कृतः इति। एतेन एव अहं निश्चितवान् यत् दण्डकः एव अपराधी इति" इति उक्तवान् राजा।

मन्त्री पुनः पृष्टवान्– "केन आधारेण भवता एवं निर्णीतम्?" इति।

राजा पुनः मन्दहासपूर्वकं पृष्टवान्– "दण्डकस्य वचनं श्रुतं खलु भवता अपि? 'नद्यां पततः रामचन्द्रस्य केशान् गृहीत्वा अहम् आकृष्टवान्' इति खलु तेन उक्तम्?" वस्तुतः तु रामचन्द्रस्य शिरसि एकः अपि केशः नास्ति। स तु जन्मना खल्वाटः। एतत् दृष्ट्वा अहं दृढं निश्चितवान् यत् दण्डकः मिथ्यावादी एव" इति उक्तवान् राजा।

राज्ञः सूक्ष्मचिन्तनं बुद्धिमत्तां च मनसि एव श्लाघमानः मन्त्री तृप्त्या शिरः चालितवान्।






बहुभ्यः वर्षेभ्यः पूर्वं पौराणिके काले सुपर्वगिरौ केसरी नाम कश्चन वानरः निवसति स्म। तस्मिन् पर्वते षष्टिसहस्राधिकाः वानराः निवसन्ति स्म। तेषां वानराणां नायकः आसीत् केसरी।

तस्मिन् पर्वतप्रदेशे प्रभासतीर्थनामकं सरोवरम् आसीत्। कदाचित् तस्मिन् प्रभासतीर्थे शङ्ख-शबलनामकयोः गजयोः पीडा अधिका जाता। तौ गजौ मुनीन् बहुधा पीडयतः स्म। एतत् ज्ञात्वा केसरी तौ गजौ एकाकी एव मारितवान्। अतः एव तेन 'केसरी' इति नाम प्राप्तम्। केसरी इति सिंहस्य अपरं नाम।

एवं सिंहबलः केसरी ब्रह्मचर्यव्रतम् आचरन् घोरेण तपसा देवं सन्तोषितवान्। ततः अपारां शक्तिं प्राप्तवान् चापि।

तस्मिन् काले शम्बसादनः नाम राक्षसः तपसा ब्रह्माणं सन्तोष्य त्रिलोकीम् अपि जितवान् आसीत्। गर्वेण व्यवहरन् सः मुनीन्, सिद्धान्, देवताः च पीडयति स्म। तस्य पीडा दिने दिने वर्धते। अतः सात्त्विकाः तृप्त्या जीवितुं न अर्हन्ति। देवाः अपि किमपि प्रतिकर्तुं न शक्नुवन्ति स्म।

अन्ते देवाः सम्भूय ब्रह्मणः समीपं गत्वा शम्बसादनेन क्रियमाणां पीडां विस्तरेण निवेद्य– "देवदेव! महादुष्टात् शम्बसादनात् भवता रक्षणीयाः वयम्। तस्य दुष्टस्य पीडां सोढुं न शक्नुमः" इति निवेदितवन्तः।

तस्मिन् एव समये महर्षिः नारदः शम्बसादनस्य समीपं गत्वा उक्तवान्–

१. आञ्जनेयस्य जन्म।



"शम्बसादन! शुभमस्तु"।

शम्बसादनः नारदं विनयेन नमस्कृत्य पृष्टवान्– "मुनिवर्य! कुतः आगमनं भवतः? का विशेषवार्ता?" इति।

"राक्षसेश्वर! हेमकूटात् आगच्छन् अस्मि। तत्र अन्यैः देवैः सह आगतः इन्द्रः, भवतः मारणार्थं कञ्चित् वानरं नियोजितवान् अस्ति। सः वानरः न साधारणः। अतः एतां वार्तां निवेद्य गन्तुम् अहम् अत्र आगतः। भवता जागरूकेण भवितव्यम्" इति सूचितवान् नारदः।

एतत् श्रुत्वा घृतेन उद्दीपितः अग्निः इव कोपेन ज्वलन् शम्बसादनः– "अहो, एवं वा! वराकाः सञ्चरन्तः तिष्ठन्तु इति मया देवेषु कृपा प्रदर्शिता। ते देवाः इदानीं वानरद्वारा मम मारणार्थं प्रयत्नं कुर्वन्तः सन्ति। कथम् एतत् सम्भवेत् इति अहम् अपि पश्यामि। एतावत्पर्यन्तं निर्जीवाः इव स्थिताः देवाः इदानीं कथम् एतावत् धैर्यं प्राप्तवन्तः? मम भुजबलं तैः पूर्णतः न दृष्टम्। इदानीं पश्यन्तु ते" इति नारदस्य पुरतः एव गर्जितवान्। नारदः तु नारायणनाम स्मरन् स्वमार्गम् अनुसृतवान्।

राक्षसः शम्बसादनः प्रलयकालीनः रुद्रः इव हस्तेन भीतिजनकं खड्गं गृहीत्वा केसरिसमीपं गतवान्। पर्वतस्थाः शिलाः पादेन प्रहरन् वीरगर्जनं कृतवान् सः। शम्बसादनस्य वीरगर्जनं विकटाट्टहासं च श्रुत्वा देवाः सर्वे भीताः। तेषु केचन ततः पलायितवन्तः। अन्ये केचन गुहासु केसरिणः पृष्ठतः च निलीय स्थितवन्तः।

"भीरवः! कुत्र धावन्ति? एकेन एव प्रहारेण भवतः सर्वान् गतप्राणान् करिष्यामि" इति वदन् शम्बसादनः अग्रे आगतवान्।

तदा केसरी उत्प्लुत्य शम्बसादनस्य अभिमुखं तिष्ठन्– "अये दुष्टराक्षस! भवतः मरणं सन्निहितम्। धावताम् अनुधावनेन पौरुषं प्रदर्शितं न भवति। यदि धैर्यं स्यात् तर्हि आगच्छतु युद्धार्थम्" इति उक्तवान्।

"अये वानराधम! लज्जास्पदम् एतत्। वीराधिवीरः अहं भवता सह युद्धं कथं कुर्याम्? मया सह युद्धं कर्तुं शिवोऽपि न शक्नोति, किमुत भवान्? शुनकतुल्यं भवन्तं



क्षणमात्रेण मारयिष्यामि" इति वदन् शम्बसादनः खड्गम् उन्नीतवान्।

तावता वानरश्रेष्ठः केसरी एकां महाशिलाम् उन्नीय क्षिपन् शम्बसादनस्य खड्गम् अधः पातितवान्। कुपितः शम्बसादनः केसरिणं लक्ष्यीकृत्य गदां क्षिप्तवान्। केसरिणः उरसा घट्टिता गदा चूर्णीभूय भूमौ पतिता। केसरी तु किञ्चिदपि न व्रणितः। एतेन आश्चर्यम् अनुभवन् शम्बसादनः शूलायुधं प्रयुक्तवान्। केसरी तत् आयुधं गृहीत्वा पादसाहाय्येन भञ्जयित्वा शम्बसादनस्य पुरतः क्षिप्तवान्। राक्षसः खड्गेन केसरिणं प्रहर्तुम् उद्युक्तः। केसरी स्वपुच्छेन प्रहृतवान्। तदा राक्षसस्य हस्तात् च्युतः खड्गः कुत्रापि पतितः।

'वानरः पादग्रहणपूर्वकम् उन्नीय क्षेप्तव्यः' इति आलोच्य अग्रे आगतवान् शम्बसादनः। किन्तु शत्रोः पुरतः अवनमनम् अवमाननं भावयन् सः भुजास्फालनेन केसरिणं बाहुयुद्धार्थम् आहूतवान्। केसरी तु दृढया मुष्ट्या राक्षसम् उरसि प्रहृतवान्। एतेन प्रहारेण राक्षसस्य उरसि स्थितानि अस्थीनि सशब्दं भग्नानि। राक्षसः रक्तं वमन् भूमौ पतितवान्। क्षणाभ्यन्तरे गतप्राणः अभवत् च।

शम्बसादनस्य मरणात् देवाः नितरां सन्तुष्टाः। प्रपञ्चव्यवहारः यथापूर्वं निर्विघ्नम् अनुवृत्तः।

सन्तुष्टाः देवाः केसरिणम् उक्तवन्तः– "भो! इतोऽपि कियत्कालम् एतत् ब्रह्मचर्यव्रतम्? योग्यां कन्यां परिणीय गृहस्थाश्रमी भवतु" इति।

केसरी एतत् अङ्गीकृतवान्। अनन्तरं देवाः स्वस्थानं गतवन्तः। केसरी योग्यायाः कन्यायाः अन्वेषणम् आरब्धवान्।

ब्रह्मा सर्वाङ्गसुन्दरीम् अहल्यां सृष्ट्वा पोषयित्वा तां वधूरूपेण गौतमाय दत्तवान्। ततः अल्पे एव काले तयोः दम्पत्योः अञ्जना नाम पुत्री जाता।

अञ्जना पूर्वस्मिन् जन्मनि विद्याधरस्य पुत्री आसीत्। सा सङ्गीते अद्वितीयं प्रावीण्यं प्राप्तवती आसीत्। स्वगानमाधुर्येण सा

प्रपञ्चम् एव वशीकरोति स्म। अतः एव तस्याः सुकण्ठी इति नाम आसीत्।

कदाचित् सा सखीभिः सह हिमालयं गता, सरोवरे स्नानं समाप्य वृक्षस्य अधः उपविष्टवती आसीत्। तत्समये दिव्यतेजस्कः अग्निः कुत्रापि गच्छन् तया दृष्टः। अग्नेः दिव्यं तेजः दृष्ट्वा सुकण्ठी हसितवती। एतेन कुपितः अग्निः– "भवती अग्रिमे जन्मनि वानरपुत्रं प्राप्नोतु" इति शापं दत्तवान्।



तेषु एव दिनेषु कुञ्जरः नाम वानरः शिवं ध्यायन् तपः आचरन् आसीत्। तस्य तपसा तुष्टः शिवः प्रत्यक्षीभूय– "भक्ताग्रेसर! पुत्रप्राप्तियोगः भवतः नास्ति। किन्तु भवता काचित् पुत्री प्राप्यते। तस्यां मम अंशात् उत्पन्नः लोकोत्तरः पुत्रः जायते। सः भवतः वंशस्य उन्नतिं साधयिष्यति" इति उक्त्वा अदृश्यतां गतः।

कुञ्जरः तु कदा वा मया पुत्री प्राप्येत इति प्रतीक्षमाणः आसीत्। एवं स्थिते कदाचित् गौतमः तस्य समीपम् आगत्य अञ्जनां तस्मै समर्प्य– "एषा भवते दातव्या इति शिवस्य आदेशः अस्ति। एतां प्रीत्या वर्धयतु" इति उक्त्वा ततः निर्गतवान्।

शिवस्य अनुग्रहात् एव एषा प्राप्ता मया इति चिन्तयन् तया सह सन्तोषेण गृहं गतवान् कुञ्जरः।

अञ्जना स्वमातापितरौ विस्मृत्य कुञ्जरं पितरं मन्यमाना, कुञ्जरस्य पत्नीं विन्ध्यावतीं मातरं मन्यमाना वर्धते स्म। कालान्तरे सा प्राप्तवयस्का जाता। 'एतस्याः विवाहः यावच्छीघ्रं निर्वर्तनीयः' इति चिन्तितवान् कुञ्जरः।

वानरोत्तमेन केसरिणा अञ्जनायाः सौन्दर्यविषयः श्रुतः। सः वने विहरन्तीं तां दृष्टवान्। लीलया गायन्त्याः तस्याः कण्ठस्य माधुर्यम् आस्वादितं तेन। तस्याः शरीरस्य सुवर्णवर्णां कान्तिं सौन्दर्यातिशयं च दृष्ट्वा केसरी व्यामुग्धः। 'एषा यदि मम परिणयम् अङ्गीकुर्यात् तर्हि मम जीवने ततोऽप्यधिकः सन्तोषदायकः विषयः न भवेत्' इति आलोचितवान् केसरी।

अञ्जनया अपि केसरी दृष्टः एव।



दर्शनमात्रेण तस्याम् अनुरागः उत्पन्नः। अनुरागवशात् तस्याः मुखम् आरक्तं जातम्। सा स्वकीयं भावं कथमपि गोपयन्ती– 'अद्य वनविहारः एतावता अलम्' इति सखीः उक्त्वा गृहं प्रतिगतवती।

केसरी ततः प्रत्यागत्य आप्तान् अञ्जनायाः दर्शनं निवेद्य, आत्मनः भावम् अपि निवेद्य– "तस्याः प्राप्त्यर्थं कः उपायः?" इति पृष्टवान्।

"सा कुञ्जरस्य पुत्री। अतः भवतः अनुरागः अस्थाने तु न। कुञ्जरः तां भवते दातुम् अङ्गीकुर्यात्। अतः प्रथमं गत्वा 'कन्यादानं करोतु' इति निवेदयाम। एतत् तेन निराकृतं चेत् बलात् वा ताम् आनयाम। भवान् चिन्तां मां करोतु" इति उक्तवन्तः आप्ताः।

अनन्तरं केसरिणा प्रेषिताः वानरज्येष्ठाः कुञ्जरसमीपम् आगत्य केसरिणः आशयं निवेदितवन्तः। कुञ्जरः एतं प्रस्तावं सन्तोषेण अङ्गीकृतवान्। "केसरी जामाता भवति यत् तत् मम सौभाग्यम्" इति उक्तवान् सः। अनन्तरं शुभे मुहूर्ते शास्त्रोक्तक्रमेण अञ्जना-केसरिणोः विवाहः सवैभवं प्रवृत्तः।

किन्तु बहोः कालात् अनन्तरम् अपि तयोः दम्पत्योः अपत्यं न जातम्। सन्तानापेक्षिणौ अञ्जना-केसरिणौ अनेकानि व्रतानि उपवासान् च आचरितवन्तौ। 'वायुदेवः पूजितः चेत् पुत्रप्राप्तिः स्यात्' इति केनचित् ज्येष्ठेन सूचितम्। अतः अञ्जना वायुदेवं ध्यायन्ती तपः कर्तुम् इष्टवती। केसरी एतद्विषये स्वसम्मतिं प्रदर्शयन् पुञ्जिकस्थलनामके प्रदेशे तां तपोनिमित्तम् उपवेशितवान्। निश्चलभक्त्या वायुदेवं ध्यायन्ती अञ्जना तपः आरब्धवती।

तस्याः तपसा सन्तुष्टः वायुदेवः दिव्यम् एकं फलं तस्याः अङ्के पातयित्वा ततः निर्गतवान्। 'तत् दिव्यं फलं खादतु' इति ध्यानस्थां ताम् अगोचररूपी वायुः आदिष्टवान्। सा तत् फलं खादितवती। अनन्तरं तस्यां गर्भचिह्नानि दृष्टानि। गर्भः दिने दिने वर्धमानः अस्ति। कदाचित् सा असह्यया वेदनया पीडिता अभवत्। तदा



काचित् अशरीरवाणी श्रुता–

"वत्से! चिन्तां मा करोतु। पूर्वं शिवेन वायुदेवाय एकम् अपूर्वं फलं दत्तम् आसीत्। तदेव फलं वायुदेवेन भवत्यै दत्तम्। तत् फलं भवत्या खादितम्। अतः शिवस्य अंशः भवत्याः गर्भे अस्ति। एवं भवती वायुदेवस्य साहाय्येन गर्भिणी जाता। अतः भवत्यां जायमानः शिशुः वायुसुतत्वेन ख्यातः भविष्यति। असदृशं सामर्थ्यं प्राप्यते तेन। तादृशस्य पुत्रस्य माता भवन्ती भवती कीर्तिमती भविष्यति" इति।

एतदनन्तरक्षणे वायुदेवः तस्याः पुरतः प्रत्यक्षीभूय– "अञ्जनादेवि! अशरीरवाणी मिथ्या न। भवती चिन्तां मा करोतु। गृहं गत्वा पतिं प्रवृत्तं सर्वं निवेदयतु" इति उक्त्वा ततः अदृश्यः अभवत्। तस्याः वेदना अपि उपशान्ता।

अञ्जना गृहं गत्वा पतिं केसरिणं प्रवृत्तं समग्रं निवेदितवती। एतत्सर्वं श्रुत्वा केसरी नितरां सन्तुष्टः।

ततः एकवर्षाभ्यन्तरे अञ्जना पुत्रं प्रसूतवती। तत्समये देवदुन्दुभयः ध्वनिताः अभवन्। अञ्जनायाः उपरि शिशोः उपरि च पुष्पाणां वृष्टिः जाता। पुत्रस्य मुखस्य दर्शनेन सन्तुष्टः केसरी उत्सवम् आचरन् सर्वान् सन्तोषितवान्।

शिशोः बुभुक्षा अधिका। यद्यत् दृष्टं तत्सर्वं खादितुम् उद्युक्तः भवति सः। कदाचित् अञ्जनादेवी शिशुं पल्लवैः निर्मिते तल्पे शाययित्वा फलानि आनेतुं वनं गतवती आसीत्।

शिशुः तदा एव गमनम् अभ्यस्यन् आसीत्। मातरम् अनुसरन् सः विना शब्दं पर्णशालातः बहिः आगतवान्। पूर्वस्यां दिशि तस्य दृष्टिः पतिता। पूर्वस्यां दिशि उदयाचलम् आरुह्य अरुणकिरणान् प्रसारयन् उपरि आगच्छन् अस्ति सूर्यः।

अञ्जनापुत्रः एषः शिशुः अरुणकान्तियुक्तं सूर्यं फलं भावितवान्। तत् फलं गृहीत्वा मुखे स्थापनीयम् इति निश्चित्य सः आकाशमार्गेण प्रस्थितवान्। सूर्यम् उद्दिश्य गच्छन्तम् एतम् अल्पवयस्कं बालं दृष्ट्वा यक्षाः, राक्षसाः, नागाः च

आश्चर्यचकिताः। प्रलयकालः सन्निहितः इति भावितवन्तः ते। रुद्रस्य नूतनः अवतारः एषः इति चिन्तितं तैः।

अञ्जनापुत्रं दृष्ट्वा भीतान् उक्तवान् सूर्यः– "एषः आञ्जनेयः। ईश्वरस्य अंशं प्राप्य लोकोद्धारार्थं जन्म प्राप्तवान् अस्ति। एतस्य अपूर्वं बलम् अस्ति। मां फलं भावयन् सः भ्रमवशात् मत्समीपम् आगच्छन् अस्ति। एतस्य एतादृशेन व्यवहारेण लोकस्य न काऽपि हानिः। अतः कस्यापि काऽपि भीतिः मास्तु" इति।

फलभ्रान्त्या आगच्छन्तं हसन्मुखं बालं दृष्ट्वा सूर्यः नितरां सन्तुष्टः। सः स्वतापं न्यूनं कृतवान्। तावता तत्र आगतः आञ्जनेयः सूर्यं मुखे स्थापितवान्। किन्तु तापम् अनुभूय तं मुखात् बहिः आनीतवान्। कोपेन मुष्ट्या सूर्यं ताडितवान्। सूर्यः तु एतादृश्या बालचेष्टया नितराम् आनन्दम् अनुभवति।

तच्च अमावास्यादिनम्। राहुः सूर्यं ग्रसितुम् अग्रे आगतवान्। राहोः घोरं रूपं दृष्ट्वा आञ्जनेयः आक्रोशनं कृतवान्। एतत् आक्रोशनं श्रुत्वा भीतः राहुः ततः पलाय्य इन्द्रसभायां स्थितवान्।

इन्द्रसभायां विद्याधराः इन्द्रं स्तुवन्तः आसन्। इन्द्रः सिंहासने उपविष्टवान् आसीत्। राहुः इन्द्रस्य पुरतः स्थित्वा– "अये इन्द्र! लोके महान् उत्पातः जातः अस्ति। भवान् तु विनोदैः सन्तोषम् अनुभवन् कालं सुखेन यापयन् अस्ति" इति।

"किं प्रवृत्तम्?' इति पृष्टवान् इन्द्रः।

"अद्य मम उत्सवदिनं खलु? अहं सूर्यस्य ग्रहणार्थं यदा गतः तदा अपरः राहुः सूर्यं गृहीतवान् आसीत्। भवान् एतत् न जानाति इति तु महते आश्चर्याय! अथवा भवान् जानन् अपि अजानन् इव व्यवहरति वा?" इति कोपमिश्रितेन स्वरेण पृष्टवान् राहुः।

इन्द्रः आश्चर्यम् अनुभवन्– "अपरः राहुः? कुत्र सः? प्रदर्शयतु तावत्" इति वदन् वज्रायुधं गृहीत्वा ततः प्रस्थितवान्। राहुः तम् अनुसृतवान्।

–(अनुवर्तते)





# सेवाधर्मः

अमरपुरनामके ग्रामे पूर्वं कश्चन धनिकः आसीत्। तस्य गृहे कोऽपि कर्मकरः चिरकालं यावत् न तिष्ठति। ये उद्योगम् इच्छन्तः आगच्छन्ति तेषां सेवातत्परता कीदृशी इति परीक्षते स्म धनिकः। सर्वे कर्मकराः एतस्यां परीक्षायाम् एव अनुत्तीर्णाः भवन्ति स्म।

कदाचित् भीम-सोमनामकौ द्वौ उद्योगम् इच्छन्तौ धनिकस्य समीपम् आगतवन्तौ। धनिकः एकैकस्मै एकैकं कण्डोलं दत्त्वा– "गृहस्य पृष्ठतः कूपः अस्ति। ततः घटेन जलम् उद्धृत्य कण्डोलं पूरयित्वा आगच्छन्तु। न शक्यते इति वचनम् अहं न सहे। सायङ्कालपर्यन्तम् एतत् कार्यं प्रचलतु। सायङ्काले एकैकस्मै एकैकं रूप्यकं दीयते" इति आदिष्टवान्।

भीमसोमौ एतत् श्रुत्वा आश्चर्यम् अनुभवन्तौ परस्परं मुखं पश्यन्तौ कण्डोलं स्वीकृत्य कूपस्य समीपं गतवन्तौ।

गमनसमये मार्गे भीमः सोमम् उक्तवान्– "अस्माकं स्वामिनः बुद्धिः सर्वथा नास्ति इति भाति। कण्डोले जलं कथं वा तिष्ठेत्?" इति।

"कण्डोले जलं न तिष्ठति इति सः अपि जानीयात् एव। न शक्यते इति वचनं अहं न सहे इति वदति सः। एतत् किमर्थम् इति न ज्ञायते" इति उक्तवान् सोमः।

उभौ अपि कूपस्य समीपं गतवन्तौ। घटे रज्जुं बद्ध्वा जलम् उद्धृत्य कण्डोले पातितवन्तौ। कण्डोले बिन्दुमात्रम् अपि जलं न तिष्ठति स्म।

अल्पे एव काले भीमः निर्णीतवान् यत् एतत् कार्यं सर्वथा अप्रयोजकम् इति। अतः सः जलोद्धरणकार्यं परित्यज्य– "कण्डोले बिन्दुमात्रं जलम् अपि न तिष्ठति। वृथा हस्तयोः वेदना। एतादृशं व्यर्थं कार्यम् अहं तु

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकाशिता कथा"

न करोमि। यजमानः इव भवान् अपि बुद्धिहीनः चेत् सायङ्कालपर्यन्तं जलम् उद्धरतु" इति उक्त्वा वृक्षस्य अधः सुखेन उपविष्टवान्।

सोमः तु सायङ्कालपर्यन्तं जलम् उद्धृतवान्। कूपे जलं समाप्तप्रायम्। जलेन सह पङ्कः अपि आगच्छति स्म।

सूर्यास्तः जातः। सोमः जलोद्धरणकार्यं समाप्य कण्डोले दृष्टिं पातितवान्। कण्डोलस्य तले कान्त्या विराजमानं किमपि दृष्टं तेन। सः अवनम्य परीक्षितवान्। तत् एकम् अङ्गुलीयकम्! सोमः अङ्गुलीयकेन सह धनिकस्य समीपं गतवान्। भीमः तम् अनुसृतवान्।

धनिकः सोमेन दत्तम् अङ्गुलीयकं स्वीकृत्य सन्तोषं प्रकटयन्– "एतस्य प्राप्त्यर्थम् एव अहं जलोद्धरणकार्ये भवन्तौ नियोजितवान्। स्वीकरोतु एकस्य दिनस्य वेतनम्" इति वदन् सोमाय एकं रूप्यकं दत्तवान्।

अनन्तरं भीमं पश्यन् पृष्टवान् सः– "भवान् अपि उद्योगम् इच्छन् आगतः खलु? तथापि किमर्थम् अल्पे एव काले कार्यं स्थगितवान्? वेतनं न इच्छति वा भवान्?" इति।

"कण्डोले जलपूरणम् अविवेकयुतं कार्यम् इति भावयन् अहं मौनं स्थितवान्" इति क्षीणेन स्वरेण उक्तवान् भीमः।

"कण्डोले जलं पूरणीयम् इति आदिशतः मम विवेकः नास्ति इति निर्णीतं खलु भवता? इदानीं वा ज्ञातं खलु भवता – मम आशयः कः इति? यत् आदिष्टं तत् विनयेन करणीयं कर्मकरेण। फलाफलविषये कर्मकरेण न चिन्तनीयम्। भवान् सेवाधर्मं सर्वथा न जानाति। अतः अन्यत्र कुत्रापि उद्योगम् अन्वेष्टुम् अर्हति" इति वदन् धनिकः भीमाय एकं नाणकं दत्त्वा प्रेषितवान्। सोमं च उद्योगे नियोजितवान् सः।

सोमः धनिकस्य तृप्तिः यथा भवेत् तथा कार्यं कुर्वन् सुखेन जीवितवान्।






# वल्लभस्य अस्वास्थ्यम्

वल्लभः नाम कश्चन तरुणः कदाचित् पार्श्वग्रामं गत्वा स्वग्रामं प्रत्यागच्छन् आसीत्। स च अरण्यमार्गः। तस्मिन् अरण्यमार्गे कस्यचित् वृक्षस्य अधः श्रीधरः नाम मध्यवयस्कः सुप्तवान् आसीत्। यदा वल्लभः तस्य समीपम् आगतवान् तदा कश्चन सर्पः तं दष्टुम् आगच्छन् आसीत्। वल्लभः एतत् दृष्टवान्। झटिति अग्रे गत्वा सर्पस्य पुच्छं गृहीत्वा आकृष्य दूरे क्षिप्तवान्।

अत्रान्तरे श्रीधरस्य जागरणं जातम्। सः ज्ञातवान् यत् वल्लभः अपायात् मां रक्षितवान् इति। अतः सः कृतज्ञतापूर्वकं वल्लभम् उक्तवान्– "वत्स! समये आगत्य भवान् मां रक्षितवान्। भवतः उपकारम् अहं कदापि न विस्मरामि। मम समीपे स्थितम् एतम् अपूर्वस्यूतं स्वीकरोतु भवान्। यदा यत् खाद्यं भवान् इच्छति, तदा तत् खाद्यं ददाति एषः स्यूतः। एतेन भवतः जीवनं सुखेन यापितं भविष्यति" इति।

वल्लभः आश्चर्येण श्रीधरं पृष्टवान्– "अपूर्वः स्यूतः? स च स्यूतः भवतः समीपे कथम् आगतः?" इति।

"वत्स! पूर्वम् अहं धनिकः आसम्। तदा मां परितः तादृशाः जनाः आसन् ये च मम धने प्रीतिमन्तः आसन्, न तु मयि। ते मधुरैः वचनैः सम्भाषणं कुर्वन्तः उपायेन मम समग्रां सम्पत्तिं स्वायत्तीकृतवन्तः। बन्धुमित्राणां दुर्व्यवहारेण खिन्नः अहम् एतत् अरण्यम् आगतवान्। कन्दमूलादिकं खादन् अरण्यवासम् आरब्धवान्। अत्रान्तरे कश्चन महात्मा कदाचित् अरण्ये मिलितः। मयि कृपादृष्टिं प्रदर्शयन् सः मह्यम् एतम् अपूर्वस्यूतं दत्तवान्। एतेन मम आहारसमस्या परिहृता अभवत्। सः महात्मा

अरण्यतः निर्गतवन्तौ। सायङ्कालसमये तौ ग्रामं प्राप्तवन्तौ।

कानिचन दिनानि सन्तोषेण गतानि। मायास्यूतस्य कारणतः वल्लभस्य भोजनसमस्या तु नास्ति। किन्तु एतावता अपि तस्य तृप्तिः नास्ति। सः इच्छति स्म यत् महत् सौधं निर्माय सेविका-सेवकान् नियोज्य सुखेन जीवनं यापनीयम् इति। सः स्वकीयाम् इच्छां श्रीधरम् उक्तवान्।

"सुखेन जीवनं यापनीयम् इति भवतः इच्छा युक्ता एव। किन्तु तदर्थं परिश्रमेण धनं सम्पादनीयं भवता। धनसम्पादनार्थं मायास्यूतस्य उपयोगः न करणीयः" इति वल्लभं जागरूकतावचनम् उक्तवान् श्रीधरः।

वल्लभः श्रीधरं पृष्टवान्— "यदि अहं दुरुपयोगं स्वीकुर्यां तर्हि किं भवेत्?" इति।

तदा श्रीधरः उक्तवान्— "दुरुपयोगः स्वीकृतः चेदपि भवतः हानिः कापि न भविष्यति। किन्तु तस्य फलं मया अनुभोक्तव्यं भविष्यति" इति।

वल्लभः धनसम्पादनेच्छां परित्यक्तुं न शक्तवान्। अतः सः मायास्यूततः खाद्यानि प्राप्य विक्रयणम् आरब्धवान्। मूलधनेन विना एतत् वाणिज्यं प्रचलति इत्यतः अधिकं धनं सम्पादयति वल्लभः।

इदानीं श्रीधरः ग्रामे स्थितेषु बहुषु गृहेषु कार्यं करोति। वल्लभेन बहुधा निवारितः




मदीयं पुण्यम् एव मायास्यूतरूपेण परिवर्त्य दत्तवान् आसीत्। एतस्य उपयोगं कुर्वन् ग्रामसहवासतः दूरे तिष्ठन् अत्र निवसामि" इति उक्तवान् श्रीधरः।

एतत् श्रुत्वा पृष्टवान् बल्लभः— "एषः मायास्यूतः मह्यं दत्तः चेत् भवतः जीवननिर्वहणं कथं भवेत्?" इति।

"भोः, मद्विषये चिन्तां मा करोतु। मम जीवनं तु कथमपि प्रचलति" इति उक्तवान् श्रीधरः।

"तर्हि भवता मम एकं निवेदनम् अङ्गीकरणीयम्। अहं तु एकाकिकतया निवसामि। अतः भवान् मया सहैव निवसतु" इति प्रार्थितवान् वल्लभः।

श्रीधरः एतं प्रस्तावम् अङ्गीकृतवान्। तौ

चेदपि श्रीधरः एतत् कार्यं न परित्यक्तवान्। यस्मिन् गृहे कार्यं करोति ततः प्रतिफलरूपेण किमपि न स्वीकरोति स्म सः।

श्रीधरेण अन्यगृहेषु क्रियमाणां सेवां दृष्ट्वा जनाः वल्लभं वदन्ति स्म– "भवान् तु प्रभूतं धनं सम्पादयन् अस्ति। ज्येष्ठं श्रीधरम् अन्येषु गृहेषु कार्यं कुर्वन्तं दृष्ट्वा अपि मौनं तिष्ठति खलु? वृद्धस्य तस्य पालनं पोषणं च किं कष्टकरम्?" इति।

एतादृशानि वचनानि श्रुत्वा खिन्नः वल्लभः कदाचित् श्रीधरम् उक्तवान्– "अन्येषु गृहेषु कार्यकरणप्रवृत्तिं कृपया त्यजतु भवान्" इति।

तदा श्रीधरः हसन् उक्तवान्– "वल्लभ! अहं भवते यं मायास्यूतं दत्तवान् सः मम पुण्यस्य प्रतीकम् अस्ति। यावत् मयि पुण्यसञ्चयः भवति तावत् मायास्यूतः फलं ददाति। मम पुण्यं समाप्तं यथा न भवेत् तथा कर्तुम् एवम् अन्यगृहेषु कार्यं कुर्वन् अस्मि" इति।

श्रीधरेण सम्पादितं पुण्यम् एवं प्रयोजनं यच्छत् अस्ति इति ज्ञात्वा वल्लभः मौनम् आश्रितवान्।

खाद्यादीनां विक्रयणतः वल्लभः प्रभूतं धनं सम्पादितवान्। एकवर्षाभ्यन्तरे विशालं सौधं निर्मापितवान्। धनिककुलोत्पन्नां काञ्चित् सुन्दरीं तरुणीं परिणीतवान् च।

अत्रान्तरे कदाचित् वल्लभः नितराम्



अस्वस्थः जातः। बहवः वैद्याः आगत्य वल्लभस्य परीक्षां कृतवन्तः। किन्तु तेषु केनापि रोगस्य कारणं न ज्ञातम्। अतः वैद्याः उक्तवन्तः– "वयम् एतस्मिन् विषये असहायाः। अतः भवान् कञ्चित् योगिवर्यं पश्यतु। सः प्रायः परिहारोपायं कमपि सूचयितुं शक्नुयात्" इति।

वल्लभस्य पत्नी पतिं कस्यचित् प्रसिद्धस्य योगिवर्यस्य समीपं नीतवती।

सः योगिवर्यः वल्लभं दृष्ट्वा उक्तवान्– "भवान् परिश्रमं विना सुखं प्राप्तुं प्रयत्नं कृतवान्। भवान् अस्वस्थः चेत् कस्य का हानिः? धनसम्पादनार्थं तु आरोग्यस्य आवश्यकता नास्ति खलु?" इति।

तदा वल्लभः खेदेन उक्तवान्–

"साधुवर्य! भवता एवं न वक्तव्यम्। यदि अहं स्वास्थ्यं न प्राप्नुयां तर्हि एतया सम्पत्त्या मम कः लाभः? सुखप्राप्त्यर्थं मया अवश्यं स्वास्थ्यं प्राप्तव्यम्" इति।

"यः परिश्रमेण जीवति तस्यैव अधिकारः सुखस्य अनुभोगार्थम्। भवान् तु अन्यस्य परिश्रमस्य फलं स्वयम् अनुभवन् पापं सञ्चितवान् अस्ति। तस्यैव पापसञ्चयस्य फलरूपेण भवता एतत् अस्वास्थ्यं प्राप्तम् अस्ति" इति उक्तवान् योगिवर्यः।

तदा वल्लभः उक्तवान्– "मम समीपे मायास्यूतः अस्ति, तस्य साहाय्येन अहं प्रभूतं धनं सम्पादितवान् इति तु सत्यम् एव। स च मायास्यूतः मह्यं केनचित् वृद्धेन दत्तः। सः वृद्धः माम् उक्तवान् अस्ति यत् मायास्यूतस्य दुरुपयोगतः तेन पापं प्राप्यते इति। एवं स्थिते पापलेपः मम कथम्?" इति।

"अये मूर्ख! भवदीयं पापभारं वहन् सः वृद्धः कश्चन महात्मा। सः भवदर्थं विशेषपरिश्रमं कुर्वन् अस्ति। किन्तु परिश्रमे वृद्धस्य प्रेरणं पापकरम्। तादृशं पापकरं कार्यं कुर्वन् अस्ति भवान्। अतः एव एतत् अस्वास्थ्यम्। इदानीं वा विवेकं प्राप्नुवन् आत्मनि परिवर्तनम् आनीय तस्य महात्मनः वृद्धस्य सेवां करोतु। तेन भवान् क्रमशः स्वास्थ्यं प्राप्स्यति" इति बोधितवान् योगिवर्यः।

इदानीं वल्लभः आत्मनः दोषं ज्ञातवान्। सः योगिवर्यं श्रद्धया प्रणम्य– "भवता यथा उपदिष्टं तथा आचरिष्यामि अहम्" इति उक्त्वा गृहं प्रत्यागतवान्।

तस्मिन् एव दिने वल्लभः धनसम्पादनार्थं क्रियमाणं मायास्यूतस्य उपयोगं परित्यक्तवान्। श्रीधरं च स्वगृहं प्रति आहूय पादयोः प्रणम्य पूर्वं कृतस्य अपराधस्य निमित्तं क्षमां प्रार्थितवान्। तस्य समीपे पूर्वं सम्पादितं धनं तु आसीत् एव। अतः सः तेन धनेन वाणिज्यम् आरब्धवान्। आरोग्येण सहैव वल्लभस्य लाभः अपि प्रवृद्धः। अनन्तरं वल्लभः सुखेन सन्तोषेण च जीवितवान्।





# भाग्यदेवतानुग्रहः

वाङ्गनामकः कश्चन कृषिकः पूर्वं चीनादेशे निवसति स्म। तस्य मातापितरौ न स्तः। तस्य सम्पत्तिः नाम एकरमिता प्राचीना भूमिः। एतस्मिन् क्षेत्रे सः परिश्रमेण कार्यं करोति। यथाशक्ति धनं सङ्गृह्णाति च।

वाङ्गस्य क्षेत्रस्य पार्श्वे एव काचित् शुष्का भूमिः अस्ति। कदाचित् वाङ्गः चिन्तितवान् यत् एषा शुष्का भूमिः क्रीता चेत् तत्र किमपि उत्पादयितुं शक्येत इति।

सा च शुष्का भूमिः तस्मिन् एव ग्रामे निवसतः वणिजः। सः वाणिज्येन प्रभूतं धनं सम्पादितवान् आसीत्। एषा शुष्का भूमिः तस्य दृष्ट्या सर्वथा निष्प्रयोजिका एव।

कदाचित् वाङ्गः तस्य वणिजः समीपं गत्वा स्वकीयां भूमिक्रयणेच्छां प्रकटितवान्। "एतस्याः भूमेः मूल्यं किम्?" इति पृष्टवान् सः। वाङ्गस्य इच्छां श्रुत्वा आश्चर्यचकितः अभवत् वणिक्। 'मया यत् मूल्यम् उच्यते तेन मूल्येन एषः भूमिं क्रेष्यति' इति चिन्तयित्वा सः वणिक् अधिकं मूल्यम् उक्तवान्।

वाङ्गस्य समीपे तावत् धनं नास्ति। किन्तु सः भूमिक्रयणविचारं परित्यक्तुम् अपि न इच्छति। अतः सः वणिजम् उक्तवान्– "श्रीमन्! मम समीपे यावत् अस्ति तावत् इदानीं दास्यामि। अवशिष्टं कालान्तरे दास्यामि। तदर्थम् अद्य ऋणपत्रं लिखित्वा दास्यामि" इति।

वणिक् एतत् अङ्गीकृतवान्। वाङ्गद्वारा ऋणपत्रं लेखयित्वा स्वीकृतवान्। किन्तु विक्रयणपत्रं तु न दत्तवान्। "यदा भवान् धनं पूर्णतः दास्यति तदा भूमिं भवतः नाम्नि लेखिष्यामि" इति उक्तवान् सः।

वाङ्गः एतत् अङ्गीकृतवान्। भूमिः प्राप्ता इति सन्तोषम् अनुभवन् गृहं गतवान् सः।

"चीनादेशीया जानपदकथा"

कानिचन दिनानि गतानि। कदाचित् वणिजः मनसि विचारः उत्पन्नः यत् मया दत्तायां शुष्कायां भूम्यां वाङ्गः कीदृशीं कृषिं कुर्वन् अस्ति इति द्रष्टव्यम् इति। अतः सः तस्याः भूमेः समीपं गतवान्। तत्समये वाङ्गः कर्षणं कुर्वन् आसीत्।

कर्षणसमये वाङ्गस्य हलस्य अग्रं भूमिस्थेन केनचित् वस्तुना घट्टितम् अभवत्। वाङ्गः कर्षणं परित्यज्य तत्र मृत्तिकाम् अपसार्य कलशद्वयम् उपरि आनीतवान्। कलशद्वये अपि सुवर्णनाणकानि आसन्। तेषु दिनेषु जनानां विश्वासः आसीत् यत् यस्मिन् भाग्यदेवतायाः कृपा भवति तेन सुवर्णकलशः प्राप्यते इति। वाङ्गः एतं विषयं न जानाति। वणिक् तु सम्यक् जानाति स्म। अतः वणिक् उक्तवान् यत् एतत् कलशद्वयं मम इति। वाङ्गः एतत् न अङ्गीकरोति। विवदमानौ तौ न्यायाधीशस्य समीपं गतवन्तौ।

वाङ्गः न्यायाधीशं निवेदितवान्— "मया एतस्मात् वणिक्तः एषा भूमिः क्रीता। अतः एषा भूमिः मम। एतस्यां भूमौ प्राप्तं कलशद्वयं ममैव" इति।

वणिक् तु एवम् उक्तवान्— "एषः कृषिकः वञ्चकः। एषा शुष्का भूमिः ममैव। एषा भूमिः मया न विक्रीता एव। एतस्यां भूमौ अहं कृषिं कर्तुम् इच्छामि। अतः कर्षणकार्ये एतं नियोजितवान् आसम्। भाग्यदेवता कलशरूपेण मम समीपम् आगता अस्ति। किन्तु अत्याशाग्रस्तः एषः वाङ्गः तां भूमिं स्वकीयां वदति। एतस्याः भूमेः प्राप्तौ तस्य



अधिकारः कोऽपि नास्ति" इति।

"श्रीमन्! परिश्रमेण सञ्चितं धनं समग्रम् एतस्मै दत्त्वा सा भूमिः क्रीता मया" इति सगद्गदम् उक्तवान् वाङ्गः।

"भूमिः क्रीता इत्यत्र प्रमाणं किम्?" इति पृष्टवान् न्यायाधीशः।

एतत् श्रुतवतः वाङ्गस्य मुखं विवर्णं जातम्। सः पूर्वं भूमेः क्रयणसन्दर्भे प्रवृत्तं वार्तालापं समग्रं निवेदितवान्।

वाङ्गस्य वचने प्रामाणिकता स्फुटतया दृश्यते स्म। अतः तस्य श्रवणात् न्यायाधीशः ज्ञातवान् यत् वणिक् एव सुवर्णनाणकयुक्तस्य पात्रस्य दर्शनात् मिथ्यावादी संवृत्तः इति। तथापि सः किमपि आलोच्य उक्तवान्– "भाग्यदेवतया कृपादृष्ट्या वणिक् अनुगृहीतः अस्ति। अतः सुवर्णकलशद्वयं वणिजः एव" इति। अनन्तरं तत् सुवर्णकलशद्वयं वणिजे दत्तवान्।

सुवर्णकलशस्य प्राप्त्या सन्तुष्टः वणिक् ततः निर्गतवान्। वणिजः निर्गमनस्य अनन्तरं वाङ्गः न्यायाधीशम् उक्तवान्– "श्रीमन्! सुवर्णकलशद्वयं मह्यं नास्ति चेत् मास्तु नाम। किन्तु मम भूमिं मह्यं दापयतु कृपया। मया यत् सञ्चितम् आसीत् तत् समग्रं दत्त्वा तां भूमिं क्रीतवान् आसम्" इति।

तदा न्यायाधीशः वाङ्गम् उक्तवान्– "भो, चिन्ता मास्तु। सर्वं भवदनुकूलकरं भविष्यति" इति। वाङ्गः ततः निर्गतवान्।

अनन्तरदिने प्रातःकाले कैश्चित् राजभटैः सह न्यायाधीशः वणिजः गृहं गतवान्।



वणिजं निगडेन बद्धवान् च। एषा वार्ता समग्रे ग्रामे प्रसृता। जनाः वणिजः गृहस्य पुरतः सम्मिलिताः।

जनान् उद्दिश्य उक्तवान् न्यायाधीशः– "मित्राणि! ह्यः एषः वणिक् उक्तवान् यत् कलशद्वयं मम क्षेत्रे प्राप्तम् इति। किन्तु एतत् मिथ्या। एतत् कलशद्वयं राजभवनात् चोरितम् इति मया ज्ञातम्। एषा वार्ता सद्यः एव प्राप्ता मया। अतः एषः वणिक् निगडेन बद्धः। एषः कठोरं दण्डयिष्यते" इति।

न्यायाधीशस्य वचनं श्रुत्वा वणिक् नितरां भीतः। सः कम्पमानस्वरेण न्यायाधीशम् उक्तवान्– "श्रीमन्! ह्यः मया असत्यम् उक्तम् इति तु सत्यम्। किन्तु मया चौर्यापराधः न कृतः। वस्तुतः तु कलशयोः विषये अहं किमपि न जानामि। तां शुष्कभूमिं वाङ्गाय केभ्यश्चित् दिनेभ्यः पूर्वम् एव अहं विक्रीतवान्। चौर्ये वाङ्गस्य एव पात्रं स्यात्। अतः वाङ्गः एव दण्डनार्हः" इति।

"भवान् भूमिं विक्रीतवान् इत्यत्र किं प्रमाणम्?" इति पृष्टवान् न्यायाधीशः।

वणिक् झटिति अन्तः गत्वा वाङ्गेन लिखित्वा दत्तम् ऋणपत्रम् आनीय प्रदर्शितवान्। न्यायाधीशः वणिक्तः तत् ऋणपत्रं स्वीकृत्य वाङ्गस्य हस्ते स्थापयन् सम्मिलितान् जनान् उद्दिश्य उक्तवान्– "मित्राणि! एषः वणिक् एव वञ्चकः। वाङ्गस्य सरलतायाः दुरुपयोगं स्वीकुर्वन् द्विगुणितेन मूल्येन स्वस्य साररहितां भूमिं विक्रेतुं प्रयत्नं कृतवान्। यदा वाङ्गः भूमौ सुवर्णनाणकयुक्तं कलशद्वयं प्राप्तवान् तदा एषः असत्यं कथयन् मां वञ्चयितुं प्रयत्नं कृतवान्। अहं तु एतस्य वचने अविश्वसन् एतं कृतकं सन्दर्भं कल्पितवान्। सुवर्णनाणककलशद्वयं तु राज्ञः न, अपि तु भूमौ प्राप्तम् एव। भाग्यदेवता वाङ्गस्य उपरि कृपादृष्टिं पातितवती अस्ति" इति।

वस्तुस्थितेः ज्ञानेन वाङ्गः नितरां सन्तुष्टः। जनाः न्यायाधीशस्य न्यायप्रियतां चातुर्यं च दृष्ट्वा तं बहुधा प्रशंसितवन्तः।



## गहना गुहा

१९५१ तमे वर्षे फ्रान्सदेशे पिरनीसप्रदेशे 'पियरी सेण्ट् मार्टिन्' गुहा अन्विष्टा। एषा प्रपञ्चस्तरे अतिगहना गुहा इति गण्यते। एतस्याः मुखद्वारस्य अन्तिमभित्तेः च मध्ये ४,३६४ द्वादशाङ्गुलदैर्घ्यम् अस्ति।





## परोपकारशीलाः पक्षिणः

आफ्रिकादेशे खड्गमृगस्य पृष्ठभागे उपविष्टाः 'आक्सपेकर्' नामकाः पक्षिणः दृश्यन्ते। एते पक्षिणः आश्रयदातुः मृगस्य शरीरे स्थितान् कीटान् अन्विष्य खादन्ति। प्रत्युपकाररूपेण, दूरात् कोऽपि अपायः दृष्टः चेत् उच्चैः विचित्रं ध्वनिम् उत्पाद्य खड्गमृगं जागरूकं कुर्वन्ति।

## तडित्

एकं क्षणम् अपि अविहाय प्रपञ्चे सदापि यत्र कुत्रापि वा तडित्स्फुरणं प्रचलत् भवति एव। प्रतिघण्टं प्रायः ३,६०,००० वारं तडित् स्फुरेत् इति तर्क्यते।



# गता वराकी विद्युत्

| | |
|---|---|
| पतिः - हा हा, लेखनसमये एव गता वराकी विद्युत्! अये, सिक्थवर्तिकां ज्वालयतु। | Oh, what a sad thing is our dependence on current! It goes off when you are half way through. Light the candle please. |
| पत्नी - सिक्थवर्तिका तत्रैव पार्श्वे कपाटिकायाम् अस्ति। | The candle is in the cupboard nearby. |
| पतिः - अये, अग्निपेटिका कुत्र? | I say, where is the matchbox? |
| पत्नी - सिक्थवर्तिका लब्धा वा? | You found the candle? |
| पतिः - आम्। अग्निपेटिका कुत्र इति वदतु तावत्। | Yes, but tell me where the match-box is. |
| पत्नी - क्षणं प्रतीक्षताम्, आनेष्यामि। | I will get it, wait a minute. |
| पतिः - इतोSपि न लब्धा वा? | You haven't got it yet? |
| पत्नी - अन्विष्यन्ती अस्मि भोः। | I am searching for it. |
| पतिः - सर्वदा अपि वस्तूनि तत्तत्स्थाने एव स्थापनीयानि। तदा एतादृशः क्लेशः न भवति। | Every thing should be in its place. There will be no problem then. |
| पत्नी - मया तत्स्थाने एव स्थापितम् आसीत्। अन्येन केनापि स्वीकृत्य अन्यत्र स्थापितम् इति भाति। | I put it back in its place. Someone else who used it must have kept it somewhere else. |
| पतिः - प्रकोष्ठे अन्या न स्यात् वा? | Can't there be another matchbox in the room? |
| पत्नी - अन्धकारे कथम् अन्यत्र गमनम्? तिष्ठतु, अन्विष्य आनयामि। | How can I find it in this darkness? Wait, I will search and get it for you. |
| पतिः - पश्यतु, विद्युत् आगता एव। | Thank heavens, the lights are on! |
| पत्नी - हन्त, पुनर्निर्गता! | Oh my God! it went off again! |
| पतिः - एषा विद्युत् सदापि एवम् एव आचरति। | It is like this throughout. |

# चित्रशीर्षिका-स्पर्धा * पारितोषिकं ५०/- रूप्यकाणि

विजितां शीर्षिकां अक्टोबर्-९० मासे प्रकटयिष्यामः।





*उपरितनं चित्रद्वयं पश्यन्तु। *युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अगस्ट्-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। *अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। *स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्स्यति। *शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। *अधोनिर्दिष्ट-सङ्केताय शीर्षिकाः प्रेषणीयाः—

**चन्दमामा (संस्कृतम्)**

**७३/२, 'अक्षरम्' रङ्गरावमार्गः, शङ्करपुरम्, बेङ्गलूरु-५६०००४**

---

## 'जून्'मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः—

प्रथमचित्रम् - **कुशलो भवेयं भवान् इव मृदङ्गवादने।**

द्वितीयचित्रम् - **कुशला भवेयं भवती इव मधुरगायने।**

प्रेषकः - चुण्डि हिमकिरणकुमारः, बि-३, सैनिकविद्यालयः, बिजापुरम्-५८६ १०२, कर्णाटकम्।




Printed by B.V. REDDI at Prasad Process Private Ltd., 188 N.S.K. Salai, Madras 600 026 (India) and Published by B. VISHWANATHA REDDI on behalf of CHANDAMAMA PUBLICATIONS, Chandamama Buildings, Vadapalani, Madras 600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

- अङ्गुलीयकम् - Ring
- अभिमुखम् - Facing
- आधिः - Pawn
- इक्षुदण्डः - Sugar-cane
- उत्तराधिकारी - Successor
- उत्पातः - Draw (Water)
- उद्धरति - Calamity
- कण्डोलः - Basket
- कर्मकरः - Servant
- कलशः - A small vessel to hold water
- कूपः - Well
- क्रियान्वितः - Translated into action
- खल्वाटः - Bald-headed
- गभीरः - Deep
- ग्रसितुम् - To swallow
- छिन्नवान् - Severed
- जामाता - Son-in-law
- तडित् - Lightning
- दासः - Slave
- द्वारशृङ्खला - Chain to secure closure of door
- धूमवर्तिका - Cigarette
- निगडः - Hand-cuff
- नूपुरः - Anklet
- पङ्कः - Mud
- पनसः - Jack fruit tree
- परामृष्टवान् - Reconsidered
- पल्लवः - A sprout
- प्रतिघण्टम् - Every hour
- प्रतीकः - Replica
- बुभुक्षा - Hunger
- भल्लूकः - Bear
- मण्डूकप्लुतिः - Jumping like a frog
- मृत्तिका - Soil
- शरावः - Lid
- शुकी - Parrot
- शुण्डा - Trunk of an elephant
- सम्माननम् - Honour
- हलः - Plough